च कैयटोक्तिनिर्वाहादवसीयते[1] । यथाप्रयोगं क्वचिदपठितेऽप्यर्थे धातवो भवन्तीति यावत् । अत्र च सत्तायां भवति, प्राप्तौ भावयते भवते, अवकल्कने भावयतीत्येव वाच्येऽन्यथावचनं यथार्हं प्रक्रियादिभिर्बालानुग्रहार्थं छन्दोनुग्रहार्थं च । एवकारश्च[2] पौनर्वचनिकः । परस्मैपदाद्येव चात्र विवक्षितं, नतु लडेकवचनाद्यपि । तथा च 'सूत्रे लिङ्गवचनाद्यप्रामाण्यमविवक्षात' इति न्यायविदः । 'ज्ञपयतिपदवत्[3] ज्ञापयेदित्यपि स्याद्' इत्यादिभिन्नलंकारानिर्देशश्चैवमेव युज्यते । णिश्चेह चुरादिणिच् । तङ् च 'तङानावात्मनेपदम्' (१-४-१००) इत्युक्तस्य भावयमान इत्या- द्यानस्याप्युपलक्षणम् । एतच्च सर्वं बालानुग्रहादिकं यथायोगमुत्तरेष्वप्युन्नेयम् । प्राप्ताविति । अत्र तावद् 'आधृषाद्वा' इति चुरादौ पठ्यते । 'युज पृच संयमने' इत्याद्या 'धृष प्रसहने' इत्यन्ता धातवो विकल्पेन णिचमुत्पादयन्तीत्यर्थः । 'भू प्राप्तावात्मनेपदी' इति युजादौ । भू इत्ययं धातुः प्राप्तौ वा णिचमुत्पादयति, आत्मनेपदी चेत्यर्थः । अत्र च यद्यप्यात्मनेपदस्य णिच्सन्नियोगशिष्टत्वाण्णिजभावपक्षे 'सन्नियोगशिष्टानामेकतरापायेऽन्यतरस्याप्यपाय' इति न्यायेन परस्मैपदमेव युक्तं, तथापि भवत इत्यात्मनेपदं वदन् एतन्मन्यते—यदाह मैत्रेयरक्षितः— 'आ कुस्मादात्मनेपदीति प्रकरणे भू प्राप्तौ वेति वक्तव्ये आत्मनेपदीति वचनं केवलाण्णिजन्तादप्यात्मनेपदं यथा स्याद्' इति ।

---

१. कैयटोक्त्या निर्वाहाद् उक्तभाष्यस्योपपत्तिवर्णनात्. २. प्रासिद्ध्यार्थपुनर्वचनवशायातः । पादपूरणार्थो न त्ववधारणार्थ इति तात्पर्यम् । 'एव साम्येऽवधारणे । पादपूरणकृच्चायम्' इति वैजयन्ती. ३. इदमष्टमश्लोके.

तदयुक्तम् । यदि खल्वाकुस्मीये काण्डे 'भू प्राप्तौ वा' इत्युच्येत, तदा 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायेनानन्तरप्रकृतस्यात्मनेपदित्वस्यैव विकल्पः प्रतीयेत, न पुनर्महाप्रकृतस्य चुरादिणिचः । तेनैतदात्मनेपदिग्रहणं न सन्नियोगशिष्टन्यायापनयनाय प्रभवतीत्याणिच्पक्षे परस्मैपदमेव युक्तमुत्पश्यामः । तथा च 'मनोरमा भा भवते' इति प्रयोगं प्रकृत्य भूवादिसूत्रे सुधाकरः—"भू प्राप्तावात्मनेपदी आधृषाद्वेति विकल्पितणिच् इति कैश्चित् समर्थितम्[1] । तण्णिच्सन्नियोगेनात्मनेपदित्वादसाधीयः । अत एव 'सं[2] राष्ट्रमभवद्' इत्यादि प्रयुयुजे" इति । धनपालशाकटायनौ चाणिच्पक्षे परस्मैपदमेव प्रतिपदाते । एवं च 'शपि तत्रैव भवति' इति पठितुं युक्तम्[3]

अन्यत्राप्येवमुन्नेतुमुचितं पाठपाटवम् ।
बली पुरुषकारो हि दैवमप्यतिवर्तते ॥

'भुवोऽवकल्कने क्रुपश्च' एतदर्थाद् भुवः क्रुपश्च स्वार्थे णिच् स्यादित्यर्थः । अत्र क्षीरस्वामी—'अवकल्कनं मिश्रीकरणं भावयति क्षीरेण घृतम्' इति । 'भुवोऽवकल्कने' इत्यपरे पठन्ति[4] । तथा च धनपालः—'क्रुपेस्तादर्थ्ये' इति पठित्वा अवकल्पयतीत्युदाजहार । तादर्थ्य इति हि भुव इति पूर्वधातोर्योऽर्थस्[5]तदर्थत्वे सतीत्यर्थः । क्षीरस्वामी तु क्रुपेर्यो[6]ऽर्थस्[7]तदर्थभाव इति व्याख्यायावक-

१. तद् गैत्रयानुसारेण केवलादात्मनेपदवचनम्. २. पृथुर्वैन्यो राज्यं प्राप्तवान् इत्यर्थो वाक्यस्य । इदं च तैत्तिरीयब्राह्मणे प्रथमाष्टके सप्तमप्रश्नेऽस्ति. ३. 'भवते शपि तत्रैव' इत्येतत्स्थान इति शेषः. ४. क्रुपिधातुपृथक्कारणेति शेषः. ५. अवकल्कनरूपः. ६. स च सामर्थ्यलक्षणः 'क्रुपू सामर्थ्ये' इति भ्वादावुक्तः. ७. तदर्थकर्त्वे.

ल्पयतीत्युदाहरणं च समर्थो भवतीति व्याचष्ट* । मूलशुद्धिस्त्वत्र कीदृशीति न विद्मः । तथा च 'दध धारणे' इत्यत्र से[2] एवाह— 'कौशिकस्तु दद धारणे, दध दान इति पाठं व्यत्यास्थत् । युक्तायुक्तत्वे तत्र सूरयः प्रमाणम् । वयं तु मतभेदप्रदर्शनमात्रेणैव कृतार्थाः । मुनिप्रख्यानां वाक्यं कथङ्कारं विकल्पयामः । वयमपि हि स्खलन्तोऽन्यैः कियन्नोपालप्स्यामहे' इति । तदेवं

पाठा व्याख्याश्च धातूनां दृश्यन्ते स्वैरिणः क्वचित् ।
प्रयोग एव भगवांस्तानवस्थापयेत् पथि ॥

सर्वथापि 'चुर स्तेये' इत्यत्र चुरादिण्यन्तेभ्यो णिचश्चेत्यात्मनेपदं नेच्छन्तीति मैत्रेयरक्षितेनोक्तं तत्र तत्र च तेनैव व्यवहृतमादृत्य भावयतीति परस्मैपदमात्रमुदाहृतम् । न त्वेतद् बहूनामनुमतम् । उक्तञ्च तेनैवापि—'धातुपारायणे त्वात्मनेपदमुदाहृतम्' इति । तेनात्र चोत्तरत्र च चुरादिण्यन्तादप्यात्मनेपदमुदाहार्यम् । शाकटायनः पुनः पूर्वमेव पक्षं पर्यग्रहीत् ॥

एवं भूवादयो धातव इति प्राथम्यं मङ्गलं चानुसृत्य भुवः पुनःपाठफलं प्रथममुक्त्वातः परं पाठक्रममुल्लङ्घ्य बुद्धिलाघवाद्यथासम्भवं मातृकाक्रममाश्रित्याह[3]—

१. एतेन पूर्वस्य व्याख्याप्रकारस्य क्षीरस्वामीयत्वं न प्रतीयते । प्रौढमनोरमायां तु 'क्षीरस्वामी तु कृपेस्तादर्थ्ये इति पठित्वा तादर्थ्य इति प्रस्तुतस्य भुवोऽर्थे मिश्रीकरणे, अथवा तच्छब्देन क्लृपिः परामृश्यते । तस्य योऽर्थः सामर्थ्यलक्षणः तस्मिन्निति द्वेधा व्याख्यद्' इति दृश्यते. २. क्षीरस्वामी. ३. अयं च क्रमो धातोरन्ते बोध्यः.

*'चष्टे' इति घपुस्तके पाठः.

दाञो दत्ते ददातीति दाणो यच्छति दो द्यति ।
दाति दायति दाबृदैपोर्दयते रक्षणे ङितः ॥ ४ ॥

'डुदाञ् दाने' जुहोत्यादिः । यद्यपि च दत्त इत्यादिनिर्देशादेव धातूनां तत्तद्गणेषु पाठः प्रायेण व्यक्तः, तथापि तत्रतत्रैवंविधं व्याख्यानं यथासम्भवं बालार्थं पाठशुद्ध्यर्थं च । 'दाण् दाने' भूवादिः । एवमुत्तरेषु* 'अविशेषोक्तौ भूवादित्वं द्रष्टव्यम् । पाघ्रेत्यादिना (७-३-७८) यच्छादेशः† । प्रपूर्वश्चायं प्राचुर्येण प्रयुज्यते । क्वचित् पुनरन्यथापि । 'यच्छति प्रियतमे रभसेन'[2] । 'शर्म यच्छत द्विपदे चतुष्पदे' इति । एवमुत्तरेष्वप्यवद्यतीत्यादौ बहुलमुपसृष्टता द्रष्टव्या । 'दो अवखण्डने' दिवादिः । 'ओतः श्यनि' (७-६-७१) इत्योकारलोपः । '[3]नुमादिनान्यभावेऽपि सादृश्यात् केऽप्यवक्षत' इति वक्ष्यमाणन्यायेनात्र पुनःपाठतां मन्यते । 'दाप् लवने' अदादिः । 'दैप् शोधने' । अवपूर्वश्चायं प्रयुज्यते । तथाच 'दाधाघ्वदाप्' (१-१-२०) इत्यत्र भाष्यम्—'अवदायति अवदातं मुखम्' इति । 'देङ् रक्षणे' ।

[दाने दत्ते ददातीति दाञो दाणस्तु यच्छति ।
लवने दाति दापस्तु दो द्यतीत्यवखण्डने ॥
रक्षणे दयते देङो दायेद् दैपस्तु शोधने ।]

१. कथादिषु ह्रस्वाकारस्यान्त्यस्य सम्भवतोऽपि प्रयोगासमवायात् तान् हलन्तकल्पतया हलन्तेषु गणयिष्यन् प्रथममाकारान्तधातूनेवारभते 'दाञ' इति । २. किरातार्जुनीये तु ''यच्छति प्रतिमुखं दयिताया' इति 'चुम्बति प्रियतमे रभसेन' इति च दृश्यते. ३. नवनवत्युत्तरशततमश्लोके. ४. अविशेषोक्त्या भ्वादित्वमस्य द्रष्टव्यम्.

*'ष्वपि' इति गपुस्तके पाठः. †'शश्च' इति गपुस्तके पाठः.

इति पाठेऽपि न फलभेदः । अत एवैवंविधाः पाठभेदाः पाठाभेदेऽपि वा पौर्वापर्यभेदा नैवाभिधायिष्यन्ते ॥

**गाते गाङो गतावर्थे [1]कै गै शब्देऽस्य गायति ।**

'गाङ् गतौ' । त्रिष्वपि वचनेषु समानं रूपम् ॥

**पाने पिबति रक्षायां पाति पायति शोषणे ॥ ५ ॥**

'पा पाने' । 'पा रक्षणे' अदादिः । 'पै ओवै शोषणे' ॥

**धेटो धयति पानार्थे धाञो धत्ते दधात्यपि ।**

'धेट् पाने' 'डुधाञ् दानधारणयोः' जुहोत्यादिः । तथा च 'डुदाञ् दाने । डुधाञ् धारणे च' इति शाकटायनः । 'डुधाञ् धारणपोषणयोः । दानेऽप्येके' इति तु मैत्रेयरक्षितः ॥

**[2]द्रै स्वप्ने द्रायति द्राति कुत्सिते गमने लुकि ॥ ६ ॥**

'द्रा कुत्सितायां गतौ' । लुकि शब्लुकि ॥

**शब्दसङ्घातयोर्धात्वोस्स्त्यायत्येकस्य सो न षः ।**

'स्त्यै ष्ट्यै सङ्घातशब्दयोः' । स्त्यै सङ्घाते, ष्ट्यै शब्द इत्यनुक्ते यथासङ्ख्यं नेष्यते । एवमन्यत्राप्येवंविधे धातुपाठे द्रष्टव्यम् । तथाच '[3]ऋादितो मेदते मेदेद् मेधाहिंसनयोर्द्वयोः' । इति, '[4]प्रत्येकं निदिनेद्योस्तां नेदते नेदतीत्युभे । कुत्सायां सन्निकर्षे वा' इति च वक्ष्यते । तत्र च शब्दे सङ्घाते वा यौ धातू,

---

१. 'कै गै शब्दे' इति धातुपाठीयामानुपूर्वीं बोधयितुं कैधातोरुपादानम्. २. धातुपाठानुपूर्वीयम् । अस्या मूलत एव बोधाद् व्याख्यायामप्रदर्शनम् । दैवानिर्दिष्टामेव हि धातुपाठानुपूर्वीं सर्वत्र पुरुषकारो निर्दिशति. ३. इदं चतुरुत्तरशततमश्लोके. ४. इदं चतुर्दशोत्तरशततमश्लोके.

तयोः स्त्यायतीति रूपमिति । एवं तर्हि किमर्थं द्वौ पठितावित्यत उक्तम् **एकस्य सो न ष इति**। तयोरेकस्य 'स्त्यै' इत्यस्य तिस्त्यासति अतिस्त्यपादित्यादिषु संश्चङन्तेषु 'आदेशप्रत्यययोः' (८-३-५९) इति सस्य षत्वं न भवति अषोपदेशत्वेनानादेशसकारत्वात् । अन्यस्य तु तिष्ट्यासति । अतिष्ट्यपदित्यादि भवत्येवेत्यर्थः । यथादैवमेव च मैत्रेयरक्षितः । क्षीरस्वाम्यादयः पुनः शाकटायनश्च द्वितीयस्य ष्ट्यायतीत्येव रूपं प्रतिपेदिरे । तद् भाष्योक्तेन षोपदेशलक्षणेन विरुध्यते । तथा हि—'धात्वादेः षः स' (६-१-६४) इत्यत्र भाष्यम्—'अज्दन्त्यपराः सादयः षोपदेशाः स्मिङ्-स्वदि-स्विदि-स्वञ्जि-स्वपयश्च । सृपि-सृजि-स्तृ-स्तृ-स्त्या-सेकृवर्जम्' इति । अच्परो दन्त्यपरो वा सकारः प्रयोग आदिर्येषां सृप्यादिभ्यः सप्तभ्योऽन्येषां धातूनां ते च, स्म्यादयश्च पञ्च पाठे षादयो वेदितव्या इत्यर्थः । 'ष्वञ्ज परिष्वङ्गे' । 'ञिष्वप् शये' । 'गमॢ सृपॢ गतौ' । शेषास्त्विकारान्तादिष्वेव वक्ष्यन्ते । तत्र च स्तृ इति ह्रस्वान्तं केचिन्न पठन्ति । तथा च 'स्तॄञ् छादने' इति दीर्घान्तमेव जिनेन्द्रादयः प्रायः पठन्ति । श्रीधरस्तु 'स्तॄञ् छादने' दीर्घः 'स्तृञ् छादने' ह्रस्व इत्युभावप्युपन्यास्थत । स्त्येति चात्र स्त्यै गृह्यते । भागवृत्तौ तु 'सीकृ-सेकृ' इत्यधिकमपि पठ्यते । तच्च 'सीकृ सेचने' इति श्रीधरो व्याकरोत्; 'एतानष्टौ वर्जयित्वा' इति चाधिक्यमेव मुक्तकण्ठमुक्तवान् । तच्चैतल्लक्षणं

१. दैवमैत्रेयरीत्या द्वयोरपि धात्वोर्दन्त्यपरसादित्वाभ्युपगतौ द्विष्पाठसाफल्यायैकस्यैव षोपदेशत्वप्रतिषेधकक्ष्यायां निवेशादपरस्मिन् षोपदेशलक्षणं प्रसरमासाद्य व्यापकत्वं प्राप्नुयात् । क्षीरस्वाम्यादिपक्षे तु तादृशविषयपरिलोपो भवतीत्येतावता विरोधो बोध्यः.

ष्ठ्यायतीत्येव प्रयोगाभ्युपगमे सादित्वदन्त्यपरत्वयोरभावात् ष्ठ्याथर्ति न व्याप्नुयात्। व्यापकेन च नाम लक्षणेन भवितव्यम्॥

**सै क्षये सायतीतीष्टमन्तकर्मणि तु स्यति॥ ७॥**

'क्षै षै जै क्षये'। सै इति तु पाठः षोपदेशलक्षणविरुद्धः। एतेनैतदपि प्रत्युक्तम्—यदुक्तं 'क्रियार्थो धातुरि'त्यत्र शाकटायनेन—"षच समवाये। सचति सिषाचयिषति। केषाञ्चिदयमषादिः पाठे। तेषां सिसाचयिषति। 'सृपिसृजिसृस्तृस्त्यासेकृवर्जमि'ति च यत् केषाञ्चित्, तदुपलक्षणम्। अन्यथा सचतिसायत्यादयोऽपि षादयः स्युः" इति। प्रबलविरोधे हि बाधैव दुर्बलस्य न्याय्या। न पुनरुपलक्षणादिभिरुपरोधगन्धोऽपि। तथा च पौर्[1]मर्षं सूत्रं [2]'विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्' इति। एवं च श्लोकेऽपि 'षै' इत्येव पठितुं युक्तम्। 'षो अन्तकर्मणि'। दिवादिः। तच्चावसानक्रिया॥

**जानातीति श्नि सिध्येज्ज्ञपयाति तु पुनर्मारणादौ घटादे-**
**[3]श्चौ मित्त्वेऽपीदमेव ज्ञप मिदिति पदं ज्ञापने मारणादौ।**
**तेनार्थाज्ज्ञापनेऽर्थे ज्ञपयतिपदवत् ज्ञापयेदित्यपि स्या-**
**दुक्तस्योक्तिर्णिचश्चेत्युदिताविहतये ज्ञापयेज्ज्ञो नियोगे॥ ८॥**

'ज्ञा अवबोधने' इत्यस्य श्नाविकरणे सति जानातीति सिध्येत्। 'ज्ञाजनोर्जा' (७-३-७९) इति जादेशः। रूपोदाहर-

१. जैमिनीयम्. २. इदं १ अध्याये ३ पादे तृतीयं सूत्रम्। अनेन हि 'औदुम्बरीं स्पृष्ट्वोद्गायेद्' इत्यादिप्रत्यक्षश्रुतिविरोधे 'औदुम्बरी सर्वा वेष्टयितव्या' इति सर्ववेष्टनादिस्मृतीनामनुमेयमूलश्रुतित्वेन दुर्बलानां बाधो बोध्यते. ३. 'चुरादिश्चुः' (११८ श्लो.) इति परिभाषया चुरादावित्यर्थः.

†'ज्ञाल' इति गपुस्तके पाठः.

5520

णमात्रं चैतत्। प्रयोगे तु 'अकर्मकाच्च' (१-३-४५) इत्यात्मनेपदं मा भूदिति कृष्णमित्यादि कर्मोपस्कर्तव्यम्; अकर्त्रभिप्रायविषयं च द्रष्टव्यम्, अन्यथा 'अनुपसर्गात् ज्ञ' (१-३-७६) इत्यात्मनेपदप्रसङ्गात्। घटादेः पुनरस्य मारणाद्यर्थत्वे ज्ञपयतीति तु सिध्येत्। पादपूरणार्थो त्रा तुः। अत्र 'मारणतोषणनिशामनेषु ज्ञा' इति घटादिषु पठ्यते। इत्थमेव च 'श्लाघह्नुङ्स्था' (१-४-३४) इत्यत्र न्यासः। 'निशानेष्विति पाठ' इति तु हरदत्तः। चन्द्रगोमी चैवमेवापाठीत्। क्षीरस्वामिशाकटायनकौमारास्त्वाद्यमपि पाठं पक्षान्तरत्वेन पर्यग्रहीषुः। तत्र निशामनमालोचनं चाक्षुषज्ञानम्। शाकटायनस्तु 'आलोचनं प्रणिधानमाहुः'इत्याह। निशानं तीक्ष्णीकरणं। तत्र मारणादिष्वर्थेषु ज्ञा मित्संज्ञो भवतीत्यर्थः। इति मित्त्वाण्णौ 'मितां ह्रस्व' (६-४-९२) इति ह्रस्वः। तेषु तु मारणे संज्ञपयतीति प्रयुञ्जते। शेषयोरपि कौमारानुसारेण विपूर्वः प्रपूर्वश्च प्रयोगो द्रष्टव्यः। विष्णुं विज्ञपयति, प्रज्ञपयति रूपं कोपं वेति। अथ ज्ञपिप्रसङ्गादनादन्तस्यापि ज्ञपेः फलमुक्तं— 'ज्ञप मिच्च' इति चुरादिमित्त्वेऽपि इदमेव पदम्, तच्च ज्ञापने मारणादौ च प्रयुज्यत इति। केचित् पुनः 'ज्ञप मारणतोषणनिशामनेषु मिच्च' इति वा 'मारणतोषणनिशामनेषु ज्ञा मिच्च' इति वा पठन्ति। व्यक्तं चैतद् 'इको झल्' (१-२-९) इत्यत्र न्यासे। अनयोस्त्वाद्यमेव पक्षं क्षीरस्वामी समाशिश्रियत्। निशानेष्विति

१. अध्याहर्तव्यमित्यर्थः. २. अत्र विशेष्यम् 'एतद्' इति. ३. 'श्लाघह्नुङ्' इत्यत्रैव. ४. दर्शयति तीक्ष्णीकरोति चेत्यर्थः। अनयोश्चार्थयोः क्रमेण रूपकोपौ कर्मणी. ५. ज्ञपिविषये चुरादौ पाठभेदान् दर्शयंस्तेषु 'ज्ञप मिच्च' इति पाठस्य युक्ततमत्वं साधयितुमारभते केचिदित्यादिना.

तु विशेषः। शाकटायनः पुनरन्यपक्षानुकूलः। *[1]तत्र च पक्षद्वयेऽपि निशानपाठोऽपि घटादिपाठसाम्याच्छाकटायनानुकूल्याच्च द्रष्टव्यः। क्षीरस्वामिपक्षे पुनर्निशामनपाठोऽपि। 'ज्ञप मिच्च' इत्येव तु मैत्रेयरक्षितः। 'श्लाघह्नुङ्स्था' (१-४-३४) इत्यत्र न्यासकारश्च "सर्वथापि 'ज्ञप्सि ज्ञीप्सायां' 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' (१-४-३४) इति ज्ञाने ज्ञापनेऽपि च प्रयोगदर्शना-[2]न्मारणाद्यर्थानामुपलक्षणत्वादयं ज्ञपिर्यथादृष्टमर्थान्तरेऽपि भवति" इति। एवं च 'ज्ञप मिच्च' इत्येव पाठो युक्ततमः। येनैवं मारणादौ ज्ञापने चार्थे ज्ञपयतीति सिद्धं, तेनार्थाद् ज्ञापनेऽर्थे द्वैरूप्यं भवति। यथा हि चुरादौ 'ज्ञप मिच्च' इति ज्ञापनेऽपि मित्त्वविधानाश्रयणाद्ध्रस्वो भवति, तथा घटादौ[3] मारणादिविशेषणबलात् ततोऽन्यत्र मित्त्वाभावाद्ध्रस्वो न भवतीत्यर्थाज्ज्ञापने द्वैरूप्यम्। अथ घटादौ मारणादिपूक्तस्य मित्त्वस्य चुरादावपि तेष्वेवोक्तिः किमर्थेत्यत उक्तम् — उक्तस्योक्तिर्णिचश्चेर्युदितस्यात्मनेपदस्य विघातार्था बाधनार्थेति। अर्थाच्च चुरादिणिचोऽन्यत्राविघातं ब्रुवता ज्ञपयत इत्यपि तत्र[4] स्यादित्युक्तं भवति। अयं च विभागश्चुरादिण्यन्तेभ्यो 'णिचश्च' (१-३ ७४) इत्यात्मनेपदाभावपक्षमाश्रि-

१. निशामनपाठस्य न्यासतः सिद्धत्वान्निशानपाठं साधयितुमाह—तत्रेत्यादि। शाकटायनानुकूल्यं च निशाने तु ज्ञा मिच्चेत्येव तेनाश्रयणाद् बोध्यम्। क्षीरस्वाम्यानुकूल्यं तु न केवलं निशानपाठस्य, किंतु निशामनपाठस्यापीत्याह — क्षीरस्वामिपक्षे इति. २. ज्ञापनाद्यधिकार्थसङ्ग्रहाय न्यासकारेण मारणाद्यर्थनिर्देशस्याव्यावर्तकत्वाभिधानाद् 'ज्ञपिः' इति पकारविशिष्टतया धातुस्वरूपस्य निर्देशाच्चेत्यर्थः. ३. घटादौ. ४. अयं पक्षो मैत्रेयरक्षितोक्तत्वेन भूधातौ दर्शितः.

*'अत्र' इति घपुस्तके पाठः.

स्योक्तः । पक्षान्तरे तु मारणादिष्वन्यतः सिद्धत्वात् ततोऽन्यत्रैवानेन विधिर्युक्तः । 'ज्ञा †नियोगे' । आज्ञापयेत् ॥

**मिमीते मायते माने माति तत्रैव शब्लुकि ।**
**मयते प्रणिदानेऽर्थे**

'माङ् माने शब्दे च' । जुहोत्यादिः । §माङ्मानशब्दयोरित्यनुक्तिरन्वाचयद्वारा[1] शब्दे प्रयोगाप्राचुर्यार्था नूनम्[2] । यदाह 'गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च' इत्यत्र क्षीरस्वामी—'*अत्र पृथक्पाठो विरलप्रयोगार्थ' इति । व्यभिचरति[3] चैतत् 'पूयी विशरणे दुर्गन्धे च' इत्यादौ । 'भृञामित्' (७-४-७६) इत्यभ्यासस्येत्त्वम् । 'माङ् माने' दिवादिः । अयं च मैत्रेयरक्षितेनानुमतः; नतु बहुभिः । तथा च 'घुमास्थागापाजहातिसां हलि' (६-४-६६)इत्यत्र न्यासः—"मा इति कस्येदं ग्रहणं, किं 'मेङ् प्रणिदान' इति भौवादिकस्य, उत 'माङ् मान' इति जौहोत्यादिकस्य, आहोस्विद् 'मा मान' इत्यादादिकस्य । 'गामादाग्रहणेष्वविशेष' इति त्रयाणामपि ग्रहणम्" इति । क्षीरस्वामी तु दिवादावेवाह—'माङ् मान इति दुर्ग' इति । 'मा माने' । आधेयस्याधारादनधिकपरिमाणतात्र मानम् । तेनाकर्मकोऽयम् । मान्ति तण्डुलाः स्थाल्यामिति । 'मेङ् प्रणिदाने' । तच्च विनिमयः । अपमयते विनिमयत इत्यादिः सोपसर्गस्यैवास्य प्रयोगो दृश्यते ॥

---

१ माङः शब्दरूपेऽर्थे या वृत्तिस्तदप्राचुर्यलक्षणानुषङ्गिकत्वरूपोऽन्वाचयश्च-शब्दस्यार्थः. २. उक्तं फलं सम्भाव्यते, न पुनरवधार्यते वक्ष्यमाणव्यभिचारादिति भावः. ३. दुर्गन्धे प्रयोगप्राचुर्यादिति शेषः.

---

†'नियोजने' इति घपुस्तके पाठः. §'माङ्मानशब्दयोरिति त्वनु' इति गपुस्तके *'अस्य' इति घपुस्तके पाठः.

### श्राति श्रायति लुक्शपोः ॥ ९ ॥

'श्रा पाके' । 'श्रै पाके' । स च द्विविधः । अन्यकर्तृकः पच्यमानकर्तृकश्च । यथा—चैत्रः पचाति । पच्यते ओदनः स्वयमेवेति । पचतीत्यस्याग्न्यादिभिस्तण्डुलान् विक्लेदयतीत्यर्थः । पच्यत इत्यस्य विक्लिद्यतीति । तत्र चान्त्यः क्वाथ इत्यके । श्रायति यवागूः क्वथतीत्यर्थः । अथ घटादौ च 'श्रा पाक' इति पठ्यते; चुरादौ च कैश्चित् । यदुक्तं 'श्रृतं पाके'(३-१-२७)इत्यत्र न्यासे— 'श्रा पाक इत्यदादौ च पठ्यते, घटादिषु च मित्संज्ञार्थः, कैश्चिच्चुरादावपि, 'श्रै पाक' इति भूवादौ पठ्यत' इति । तथा च चन्द्रगोमिना चुरादावपि 'श्रा पाके' इति पठ्यते । तत्र च घटादौ 'श्रा पाक' इत्यस्यार्थे वृत्तिकृतो विवदन्ते । तत्र तावच्छ्रातिश्रायत्योः सामान्यानुकरणमिति मैत्रेयरक्षितक्षीरस्वामिशाकटायनाः श्रातेरनुकरणमिति हरियोगी । सर्वथापि पाकेऽर्थे श्रा मिद्भवतीत्यर्थः । श्रपयति श्रपयते । पाकादन्यत्र श्रापयति घर्मः । स्वेदयतीत्यर्थः । चुरादौ चैतदेव रूपं 'नान्ये मितोऽहेतौ' इति मित्त्वनिषेधात् । येषां चुरादौ मित्त्वमुक्तं ज्ञपयति यमयति चहयति चँपयतीति, तेभ्योऽन्ये धातवो हेतुमण्णिचोऽन्यत्र णौ मितो न भवन्तीत्यर्थः । तदेवं चतुर्षु श्रापाकेषु सत्स्वपि द्वयोरेव फलव-

---

१. पाकश्च. २. विक्लेदनरूप इत्यर्थः. ३. विक्लित्तिरूप इत्यर्थः. ४. श्राश्रैधात्वोः. ५. 'अर्थे' इति तादर्थ्येऽव्ययम् । घटादिपठितश्राधातुविषय इत्यर्थः. ६. धातुपाठव्याख्यातार इत्यर्थः. ७. चहस्थाने 'चप' इति मैत्रेयस्य पाठादिदं रूपम् । एवञ्च ज्ञपादिपञ्चके त्रयाणां प्रदर्शनमन्ययोरप्युपलक्षणमसति पाठभेदे . ८. 'श्रा पाके' इति समुदायानुकरणाद् एदन्तात् सुप् । तदाकारेषु पाठेष्वित्यर्थः । श्रापाठेष्विति तु तात्पर्यम्.

चनं घटादेर्ज्ञपयातिवद्दूह्यत्वाच्चुरादेश्च मैत्रेयरक्षितादिवृत्तिष्वदर्शनाद् । 'उक्ता न दुष्यन्त्यन्यसम्भवे' इति वक्ष्यमाणनीत्या निर्वाहः सर्वत्राप्यभ्यूह्यः ॥

गतिगन्धनयोर्वाति वायतीति तु शोषणे ।
वयते वयतीत्येवं तन्तुसन्तान इष्यते ॥ १० ॥

'वा गतिगन्धनयोः' अदादिः । गन्धनं मर्दनं हिंसा । तथा कथादौ क्षीरस्वामी—"'वा गतिसुखसेवनयोः' । वापयति । वातेत्येके । वातयति अववातद्" इति । हेमचन्द्रस्तु 'वातणि'ति पठित्वा 'सुखसेवनयोरित्येक' इति चोक्त्वा 'वेत्येक' इत्यप्याह । णित्त्वं चुरादित्वचिह्नम् । 'पै ओवै शोषणे' 'वेञ् तन्तुसन्ताने' ॥

गतौ त्यागे यथासङ्ख्यं जिहीते च जहाति च ।

'ओहाङ् गतौ' 'भृञामिद्'(७-४-७६)इतीत् । 'ओहाक् त्यागे' जुहोत्यादिः ॥

रै शब्दे रायतीतीष्टं रा दाने राति शब्लुकि ॥ ११ ॥

'रा ला आदान' इति चन्द्रः । तन्मतेनात्राप्याङ्प्रश्लेषो द्रष्टव्यः ॥

स्नातीति शौचे †स्नः स्नायेदिति चेच्छन्ति केचन ।

---

१. दैवस्यान्तिमश्लोकशेषोऽयम्. २. कथादिपाठसामर्थ्यादेव सवर्णदीर्घानापन्नो ह्रस्वाकारो धातोरन्ते णिज्विवक्षायां 'अतो लोप' (६-४-४८) इति लुप्तः कल्प्यः । धातोश्चैवमग्लोपित्वाद् 'अववापद्' इति लुङि रूपं द्रष्टव्यम्. ३. मूले 'रा दान' इत्यत्रापि.

---

†'तु' इति क-गपुस्तकपाठः

इति च क्वचित् कोशे दृश्यते । 'ष्णा शौचे' । अदादिः । 'ष्णै शौचे' । तथा च—

'पाञ्चाल्याः पद्मपत्राक्ष्याः स्नायन्त्या जघनं घनम् ।
या स्त्रियो दृष्टवत्यस्ताः पुम्भावं मनसा ययुः ॥'

इति भगवान् व्यासः । 'स्नाति स्नायत्याप्लवत' इति चाख्यातनिघण्टुः । 'उष्णीषं स्नायतेः' इति निरुक्तं चैवमेव व्याचख्युः—'उष्णीषं शिरोवेष्टनं । स्नायतेः शौचार्थस्य[2] वेष्टनार्थस्य वोभयस्यापि तत्र सम्भवाद्' इति । एवं च 'ष्णै वेष्टन' इत्यस्यापि स्नायेदिति द्रष्टव्यम् । क्षीरस्वाम्यादीनां च बहूनामनुमतोऽयं पाठः । देवेन तु 'ष्टै वेष्टने स्तायति तिष्टापयिषति' इति मैत्रेयरक्षितोक्ततकारविस्रम्भान्नायमनुसृतः ॥

**क्षये क्षयति हिंसायां क्षिणातीति षितो भवेत् ॥ १२ ॥**
**निवासगत्योः क्षियति क्षिणोत्यावगुणे क्षिणोः ।**
**[एके क्षेरेव भाषायां क्षिणोतीति पदं विदुः ।]**

अत्रान्त्यमर्धं क्वचिदेव[1] दृश्यते । 'क्षि क्षये' । 'क्षिरैश्वर्ये इत्येके' इत्येवं क्षीरस्वामी; 'ऋभून् क्षयति ईष्टे ऋभुक्षेन्द्रः' इति च । 'क्षिष् हिंसायां' । क्र्यादिः । षिद्ग्रहणमस्यैव पाठस्योपलक्षणार्थं, 'रि क्षि' इति वक्ष्यमाणक्षिव्यावृत्त्यर्थं च, 'षिद्भिदादिभ्योऽङ्

---

१. क्वचिदेवेत्यनुक्त्या बहुष्वदर्शनेऽप्येकत्र दर्शनं वक्ष्यमाणप्रयोगतः स्नाधातुपुनःपाठावधारणादादरणीयं मन्यते । अन्यथा तु समनन्तरश्लोकव्याख्यायामिव अदर्शनस्यादरणीयतां सूचयितुं निषेधप्रधानमेवकारं निर्दिशेत्. २. 'शौचार्थस्य' इति भगवद्दुर्गः. ३. एवकारलभ्यस्य बहुष्वदर्शनस्य प्रधानवाक्यार्थस्यादरणीयतां मन्यते क्षिणोतीति पदस्यान्यतः सिद्धत्वात्.

(३-३-१०४) इत्यङि कृते क्षियेत्येवंरूपफलसूचनार्थं च। दीर्घा[1]-न्तोऽयमित्येके। 'क्षीणाति' इति हेमचन्द्रः। 'क्षि निवासगत्योः'। तुदादिः। श्नौ उविकरणे अगुणे 'संज्ञापूर्वको विधिरनित्य' इति गुणाभावे च सति 'क्षणु हिंसायां क्षिणु च' इति मैत्रेयरक्षिताद्यु-क्तस्य धातोः क्षिणोतीति भवति। अस्य च नुमादिनान्यभावेऽपि क्षिसादृश्यादत्रोक्तिः। स्वरितेत्त्वाच्च क्षिणुत इत्यात्मनेपदस्याप्यु-पलक्षणमेतत्। हरियोगी तु अत्र 'संज्ञापूर्वको विधिरनित्य' इत्ये-तदनादृत्य क्षेणोतीत्युदाहार्षीत्। तथैव च चान्द्रेण पूर्णचन्द्रेण 'ऋणु गतौ' 'तृणु अदने' 'घृणु दीप्तौ' इत्यत्र अर्णोति तर्णोति घर्णोतीत्युदाहृत्योक्तं—"'धातोर्लघोरुपान्त्यस्यादेङ् नेष्यत' इत्य-न्यः। तस्याभिप्रायो मृग्य" इति। क्षीरस्वामी पुनः क्षणुमेव पठि-त्वा 'क्षिणु इति दुर्गः क्षिणोति' इत्याह; ऋणोतीत्यादि[2] चोदाहृत्य 'एते सार्वधातुके सन्दिग्धगुणाः अर्णोति' इत्याद्याह[3]। क्षेरेव तु श्नौ सति भाषायामपि क्षिणोतीति भवतीत्येके। तथा च मैत्रेयर-क्षितः स्वादिगणे 'तृप प्रीणने' इत्यस्यानन्तरं पठ्यमानं छन्दसी-त्येतद् व्याचक्षाणः 'छन्दसीत्यागणपरिसमाप्तेरधिक्रियत' इति क्षी-रस्वामिवदुक्त्वाह—"'रि क्षि चिरि जिरि दाश दृ हिंसायाम्'। क्षि-णोति। भाषायामप्यस्य प्रयोगं केचिदिच्छान्ति। 'पञ्चबाणः क्षि-णोति'" इति। क्षीरस्वामी तु ऋक्षि इति पठित्वा ऋङ्क्ष्णोतीति[4] ओनृङ्क्ष इति चोदाहृत्य 'ऋणोति क्षिणोतीत्येके' इत्याह॥

---

१. दीर्घान्तत्वमेवादृतं सिद्धान्तकौमुद्याम्. २. आदिना तृणोति घृणोति. ३. आदिना तर्णोति घर्णोति. ४. इदित्त्वान्नुम्। सिद्धान्तकौमुद्यां तु एकधातु-पक्षे 'ऋक्षिणोति' इत्युदाहरणं दृश्यते. ५. अयं प्रयोगो मन्त्रे मृग्यः. 'इजादेश्च गुरुमतोऽनृच्छः' (३-१.३६) इत्याम् 'अमन्त्र इति' निषेधान्न.

**जयेज्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः ॥ १३ ॥**
**उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयेऽर्थे सकर्मकः ।**

'जि जये' । जयेत् कृष्णः । सर्वोत्कर्षेण वर्ततेत्यर्थः । 'जि अभिभवे' । जयेत् कंसम् । 'जि, ज्रि अभिभवे' इति क्षीरस्वामी । 'अभिषव इत्यपरे' इति *च पूर्णचन्द्रः । तत्र च ज्रि इति पाठो ज्रयतीति ताभ्यामुदाहृतोऽपि 'जिगांदुपज्रयति गोरपीच्यम्' [1] इत्यादिदर्शनादार्षः । सर्वथाप्यर्थभेदाद् द्विष्पाठ इति तात्पर्यार्थः । [2]एवं च 'ज्रि अभिभवे' 'जि जये च' इति सकृदेव पाठश्चिन्त्य इत्यप्यर्थादायातम् । [3]सकर्मकाकर्मकोक्त्या तु प्रयोगभेदश्चास्तीत्युक्तम् । नन्वेवमपि 'जि जय' इत्येव द्वावप्यर्थौ सिद्धौ जयत्वाविशेषादित्यत उक्तम् उत्कर्षप्राप्तिरिति । न जय इति जयमात्रं गृह्यते । द्विष्पाठबलाद् गो[4]बलीवर्दनीत्या जयविशेषस्यैव ग्रहणात् । द्विष्पाठस्त्वर्थप्रयोगभेदौ व्यङ्क्तुमित्यभिसन्धिः ॥

**अयत्येतीयते गत्यामधीतेऽध्येति चेङिकोः ॥ १४ ॥**

'इ गतौ' । 'ई' इत्येके । अनयोश्च पाठयोरियाय अयाञ्चकारेति फलभेदः । तयोश्चाद्ये 'अभ्यासस्यासवर्णे' (६-४-७८) इतीयङादेशः । अन्त्ये तु 'इजादेश्च गुरुमतोऽनृच्छः' (३-१-३६)

१. इदं ७ अष्टके २ अध्याये २९ वर्गे ९ ऋचि । उपज्रयतीत्यस्य उपगच्छतीत्यर्थो वर्णितः सायणाचार्यैः. २. द्विष्पाठस्य प्रामाणिकत्वे सिद्ध इत्यर्थः. ३. 'आद्येऽर्थेऽसावकर्मकः' इत्युक्त्या. ४. गोशब्दस्य गोविशेषपरत्वाश्रयणन्यायेन.

*'च' इति न पठ्यते गपुस्तके.

इत्यामः। तत्र चैकत्वेऽप्यादिवद्भावव्यपदेशिवद्भावाभ्यामिजादित्वगुरुमत्त्वे। व्यक्तौ चैतौ पक्षौ मैत्रेयरक्षितवृत्तौ। अपरे पुनरुभावपि न पठन्ति। व्यक्तं चैतद् धनपालशाकटायनवृत्त्योः। अपि च 'शौटृ गर्वे' इत्यादिकान् कांश्चन धातून् पठित्वान्ते च 'उदात्ता' इत्युच्यते। तच्चास्मिन् प्रकरणेऽयतेरपि पाठे सति तस्य 'अनिट् स्वरान्तो भवतीति दृश्यताम्' इत्यनुदात्तत्वात् प्राचुर्याभिप्रायेण कथञ्चिन्नेयं स्याद्, यथा वा मैत्रेयराक्षितः—'उदात्तत्वमयतिवर्जम्, भट्टग्रामन्यायेन तूदात्ता इत्युच्यते' इति। स चायं न्यायः सुनिश्चित एवायतेः पाठे शोभेत; विप्रातिपन्ने पुनरुदात्तोक्त्याञ्जस्यवशादपाठपक्ष एव साधीयान्। उदयतीत्यादि चैवमसाध्वेवास्तु। क्षीरस्वामी पुनः 'इट किट कटी गतौ' इति पठित्वा 'ईदित्त्वात् कट्टः कट्टवान्। अन्ये इंदितमेनम् ई च प्रश्लिष्टमाहुः' इति चोक्त्वा कण्टति क(ण्टा?)ण्टकफलः, मानुषकण्टकः 'उदयति दिननाथे याति शीतांशुरस्तम्' इति चोदाहृत्य (दिक्कालादप्ययगतौ?) इति पठित्वैतदेवोदाहरन् साध्वेव मन्यते। 'इण् गतौ'। अदादिः। 'ईङ् गतौ'। दिवादिः। 'इङ् अध्ययने'।

१. आम्प्रत्ययस्यादन्तत्वममित्त्वाय. २. आदिवद्भावस्य वचनं व्यपदेशिवद्भावेन गतार्थत्वं व्यङ्क्तुम्. ३. इ, ई इति पाठभेदपक्षौ. ४. गडिपर्यन्तान्. ५. 'एकाच उपदेशेऽनुदात्ताद्' (७-२-१०) इति सूत्रे काशिकायामनिट्कारिकेयम्. ६. 'भूयसा व्यपदेश' इति न्यायेन. ७. साधीयःपक्षे. ८. 'पनसः कण्टकफल' इत्यमरः. ९. कुण्डलनान्तर्गतं "हिक्कादौ 'अय व्यय गतौ'" इति संस्कृत्य पठनीयं प्रतिभाति। हिक्कप्रभृतिगुहूपर्यन्तधातुगणो हिक्कादिः। अत एव तेन स्वरितेता 'उदयति' इति प्रयोगस्य सिद्धत्वात् 'कटी' इत्यत्र धात्वन्तरप्रश्लेषमन्यपक्षीयं वदन् क्षीरस्वामी स्वयं न रोचयाम्बभूव.

'इक् स्मरणे' । अदादी । 'इङिकावध्युपसर्गं न व्यभिचरतः' इत्याहुः । 'तदधीते तद्वेद' (४-२-५९) 'अधीगर्थदयेशां कर्मणि' (२-३-५२) इति निर्देशश्चैवमेव युज्यते ॥

**सिनोति सिनुते बन्धे सिनीते च सिनाति च ।**

'षिञ् बन्धने' । स्वादिः क्र्यादिश्च ॥

**ईषद्धासे स्मयेतोति स्माययेतेत्यनादरे ॥ १५ ॥**

'स्मिङ् ईषद्धसने' । 'स्मिट अनादरे । स्मिङित्येके' इति मैत्रेयरक्षितः । तत्र च स्मिङ्पक्षेऽवयवद्वारा ण्यन्तस्यापि ङित्त्वादात्मनेपदम् । अवयवे हि कृतं लिङ्गं समुदायस्य विशेषकं भवति, तच्चेत् तत्राकृतार्थं; यथा सक्थनि कर्णे वा कृतं गोः । 'अट्ट स्मिट अनादर' इति तु टवर्गान्तकाण्डे शाकटायनः । क्षीरस्वामी त्वाह–" 'स्निट स्नेहने' स्नेटयाति । स्मिटेत्येके । 'स्फिट अनादरे' स्फेटयति । संस्फेटस्तुमुलं युद्धम्" इति ॥

**श्रीणाति पाके श्रीणीते सेवायां श्रयते श्रयेत् ।**

'श्रीञ् पाके' । क्र्यादिः । 'श्रिञ् सेवायाम्' ॥

**मीञो मीनाति मीनीते हिंसायां मीयते ङितः ॥ १६ ॥**

**मिनोति मिनुते स्वादेर्गतौ मयाति माययेत् ।**

'मीञ् हिंसायाम्' । क्र्यादिः । 'मीङ् हिंसायाम्' । दिवादिः । 'डुमिञ् प्रक्षेपणे' । 'मी गतौ' । युजादिः । मताविति क्षीरस्वामी ।

**यौ द्रवीकरणेऽनात्वे लीनयेल्लाययेल्लयेत् ॥ १७ ॥**

**लापयेल्लालयेदात्वे श्लेषणे लीयतेऽलिनात् ।**

---

१. अत एव 'कलिसस्फेटसंयुगा' इत्यमरकोशे संस्फोटपाठस्यायुक्तत्वमाह क्षीरस्वामी तद्व्याख्यायाम्. २. आधृषीय इत्यर्थः.

'ली द्रवीकरणे' इति युजादौ पठितस्य लियो 'विभाषा लीयतेः' (६-१-५१) इत्यात्वाभावपक्षे 'लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने' (७-३-३९) इति नुकि सति लीनयेदिति भवति; असति तु लाययेदिति । णिजभावे तु लयेदिति । आत्वपक्षे पुनर्लुगागमे सति लालयेदिति; तदभावे तु पुकि लापयेदिति । तत्रात्वमयुक्तं[1] 'विभाषा लीयतेः' इत्यत्र 'लिनातिलीयत्योर्यका निर्देश' इति भाष्येण युजादिलिय आत्वाभावात् । देवेन तु मैत्रेयरक्षितविस्रम्भादेतदुक्तम् । 'लीङ् श्लेषणे' । दिवादिः । 'ली श्लेषणे' । क्र्यादिः । 'प्वादीनां ह्रस्वः' (७-३-८०) इति ह्रस्वः ॥

**स्रवणे रीयते रीङो रिणाति गतिरेषयोः ॥ १८ ॥**

'रीङ् स्रवणे' । दिवादिः । 'री गतिरेषणयोः' । प्वादिः । रेषणं वृकशब्दः । यदाह यादवप्रकाशः—'वृकस्य रेषणं रेषा हेषा ह्रेषा च वाजिनाम् । बृंहितं करिणां शब्दः' इति ॥

**व्रीणाति वरणे तत्र व्रीङो व्रीयेत तु श्याने ।**

'व्री वरणे' । क्र्यादिः । यथा[2] पुनः 'प्वादीनां ह्रस्वः' (७-३-८०) इत्यत्र वृत्तिः[3]—"प्वादयः क्र्यादिषु पठ्यन्ते 'पूञ् पवन' इत्यतः प्रभृति 'प्ली गतौ वृद्' इति यावत् । केचिदिच्छान्ति वृत्करणमेतत् प्वादीनां ल्वादीनां च परिसमाप्त्यर्थमिति ।

१. अतो लालयेल्लापयेदिति रूपे युजादिलियोऽप्रामाणिके इत्यर्थः. लीनयेदित्यपि 'लीलो'रित्यत्र लासाहचर्यादस्वार्थणिज्विषय एव लीधातुर्गृह्यते, नतु युजादिरित्येतदनाश्रित्य समर्थनीयम्. २. येन प्रकारेण. वृत्तिरित्यनेनास्य सम्बन्धः. अस्य च यथाशब्दस्य 'तथास्यापि' इति वक्ष्यमाणतथाशब्देन प्रतिनिर्देशः. ३. काशिका.

अपरे तु ल्वादीनामेव परिसमाप्त्यर्थं वृत्करणमिच्छन्ति आगणान्ताः प्वादय" इति, तथास्यापि प्वादित्वं पक्षे स्यात्। यथा तु 'ज्ञाजनोर्जा' (७-३-७९) इत्यत्र भाष्यं—"दीर्घोच्चारणं किमर्थम्। 'अतो दीर्घो यञि' (७-३-१०१) इति दीर्घत्वं भविष्यति" इति, तथैतन्नेष्यते। [1]यदि हि वृत्त्युक्तरीत्या[2]क्र्यादिगणान्तात् प्वादयः, तदा जानातेरपि प्वादित्वेन ह्रस्वे प्राप्ते तद्व्यावृत्त्यर्थमेव दीर्घोच्चारणं स्यादिति कैमर्थक्यं[3] न स्यात्। तस्मादावृत्करणादेव प्वादयः। वृत्तिश्च यावदित्यन्तात्रैवाञ्जस्यं धत्ते। [4]वृत्कृतं चैवं वृत्तः समाप्तोऽयं प्वादिर्ल्वादिश्च क्र्याद्यवान्तरगण इत्यर्थकं, 'पूञ् पवने' 'लूञ् छेदने' इत्यदूरपाठादुभयोरपि गणयोरवध्यपेक्षायाश्चाविशेषात्। ल्वाद्यानन्तर्यमतन्त्रम्। अतश्च[5] व्रियो वृत्करणात् परत्वेन प्वादित्वाभावात् व्रीणातीति साधूक्तं देवेन। 'व्रीङ् वृणोत्यर्थे'। स च वरणम्। अन्योऽप्यर्थो यथाप्रयोगं गम्यः॥

**प्रीङ् प्रीतौ प्रीयतेऽप्रीणात् प्रीणीते तर्पणे ञितः॥ १९॥**
**अणौ यौ ञित्त्वसाफल्यात् प्रीणयेत् प्रयते प्रयेत्।**

'प्रीङ् प्रीतौ'। प्रीयते। दिवादिः। 'प्रीञ् तर्पणे कान्तौ च'। क्र्यादिः। कान्तिः कामना। 'प्रीञ् तर्पणे'। युजादिः। तत्र अणावित्यादेरेषोऽर्थः—यौ तु तर्पणे ञितः प्रीणयेदित्यादि स्याद्; न च ञित्त्वादेव प्रयत इतिवत् प्रीणयेतेत्यपि स्यात्, अण्यन्ता-

---

१. तेन प्रकारेण पक्षद्वयपरकाशिकारीत्येत्यर्थः. २. आङः प्रश्लेषोऽत्र बोध्यः. ३. एतच्चावश्यकम् अङ्गवृत्तपरिभाषाज्ञापनाय. ४. अत्रैव आवृत्करणात् प्वादित्व एव। 'अन्यथा 'प्ली गतौ वृदिति यावद्' इत्ययमंशः 'केचिदिच्छन्ती'त्यादिना वक्ष्यमाणत्वान्न वक्तव्यः स्यात्। उक्तश्चासौ स्वानुमतत्वसूचनार्थ इत्यभिप्रायः. ५. वृत्करणम्.

वस्थायां ञित्त्वाख्यस्य लिङ्गस्य कृतार्थत्वादिति । तत्र चाद्ये रूपे 'णिच्प्रकरणे धूञ्प्रीञोर्नुग्वचनम्' इति वार्त्तिकेन नुक् । धूञ्-प्रीणोरिति तु पाठे क्र्यादेरेवानेन नुग्विधानात् प्राययेदिति पठितव्यम् । आह चात्र हरदत्तः — 'श्नान्तानुकरणाद्दै-वादिकस्य न भवति' इति । दैवादिकग्रहणेन चात्र चौ-रादिकोऽप्युपलक्षयितव्यः । तथा 'धूञ्प्रीणात्योर्नुग्' इति कौ-माराः । धातुवृत्तिकाराः पुनर्युजादावपि प्रीणयतीत्युदाहरन्तो धूञ्प्रीञोरित्येव पाठं मन्यन्ते । तन्त्रान्तरीयाश्चैवमेव पठन्ति ॥

**विहायसां गतौ डीङो डयते डीयते पदे ॥ २० ॥**

'डीङ् विहायसां गतौ' । भ्वादिर्दिवादिश्च । विहायसां विहगानाम् । 'डीङ् आकाशगमन' इति भूवादौ चन्द्रः । तथा भीमसेनोऽप्यत्र विहायसेति पपाठ । धनपालश्चाकाशगताविति व्याकुर्वन्नेवमेव पपाठ । दिवादौ तु 'डीङ् गतौ' इति क्षीरस्वामि-धनपालौ तन्त्रान्तरीयाश्च ॥

**षुञः सुनोति सुनुते प्रसवैश्वर्ययोरसौत् ।**
**गतौ तयोश्च सवति द्विरुक्त्या† तस्य सो न षः ॥ २१ ॥**

'षुञभिषवे' । स्वादिः । 'षु प्रसवैश्वर्ययोः' । अदादिर्भूवा-दिश्च । 'ओमिति ब्रह्म प्रसौति'[२] इत्यादिदर्शनात् प्रसवोऽभ्य-नुज्ञा । 'उतो वृद्धिर्लुकि हलि' (७-३-८९) इति वृद्धिः । 'सु, स्रु गतौ' । द्विरुक्त्येति । 'स्रु गतौ' । 'षु प्रसवैश्वर्ययोश्च' इति पाठ्ये सोर्द्विष्पाठाद् गत्यर्थस्य सुसावेत्यादौ षत्वं न भवतीत्यर्थः । भाष्ये

१. अश्नान्तत्वाविशेषादित्यर्थः. २. इदं तैत्तिरीयोपनिषदि ८ अनुवाके । प्रसौति अभ्यनुजानातीत्यर्थः.

†'क्त्यैकस्य' इति खंपुस्तके पाठः.

तु नैतादिच्छन्ति। यदि ह्यच्परः सादिरप्यषोपदेशः स्यात्, तदा भाष्योक्तम् 'अज्दन्त्यपराः सादयः षोपदेशा' इति षोंपदेशलक्षणमव्यापकं स्यात्। अत एव 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः' (१-३-८६) इत्यत्र 'दु द्रु गतौ' इति पठित्वापि 'स्रु[१] गतौ' इत्येव न्यासे पठ्यते; न तु 'सु[२] स्रु गतौ' इति। अपरे पुनः 'शु[द्रि?]स्रु गतौ' इति पठन्ति। तथा च 'शु दु द्रु स्रु गतौ' इति शाकटायनः। क्षीरस्वामी तु 'शु श्रु गतौ' इति पठित्वा शवीति शृङ्गं प्ररोहः, आश्रृणोति चैत्रायेति चोदाहृत्य 'श्रु श्रवण' इत्यस्य स्थाने 'स्रु गतौ' इत्यपि पपाठ। 'शुसिचिमीनां दीर्घश्च' इति चोणादौ क्रनि शूरशब्दो व्युत्पाद्यते। 'शूरः शवतेर्गतिकर्मणः' इति च नैरुक्ताः। न चान्यः शुर्दृश्यते। उणादिवृत्तौ तु सौत्रोऽयं धातुः॥

**स्थैर्ये ध्रवति गत्यां तु स्थैर्ये च ध्रुवतीति शे।**

'ध्रु स्थैर्ये'। 'शु, दु, द्रु, स्रु गतौ। ध्रु स्थैर्ये च' इति शाकटायनः। 'ध्रु गतिस्थैर्ययोः'॥

**दुनोति दूयते तापे दवतीति गतौ पदम्॥ २२॥**

'टुदु उपतापे'। स्वादिः। 'दूङ् परितापे'। दिवादिः। 'दु द्रु गतौ'॥

**अव्यक्तशब्दे कवते कुवते त्वार्तशब्दने।**

**कौतीति शब्दमात्रे स्याद्**

---

१. द्रुधातुमात्रे प्रदर्शनीये अधिकवचनेन धातुपाठस्थपाठाकारविशेषप्रदर्शनसंरम्भमाविष्कृत्यापीत्यर्थः. २. यद्येष पाठोऽभाविष्यद्, अवश्यमदर्शयिष्यत 'दु द्रु गतौ'वितिवत्.

'कुङ् शब्दे'। भ्वादिस्तुदादिश्च। अत्रान्त्ये 'गाङ्कुटादि' (१-२-१) सूत्रे हरदत्तः—"आकूतमिति प्रयोगदर्शनात् 'कूङ्शब्द' इति दीर्घान्त" इति। 'अन्ये कूङिति पठन्ति। आकूतमिति प्रयोगदर्शनाद्' इति धनपालः। 'ऊकारान्तोऽप्यङ्गीचक्रे, आकूतम् आकूत्यै इति' इति भूवादि (१-३-१) सूत्रे सुधाकरः। कुङ् कूङिति च शाकटायनः। 'कु शब्दे'। अदादिः। तदेवं यद्यप्येते शब्दमात्रे पठ्यन्ते, तथाप्यर्थविशेषः प्रयोगवशादाश्रीयते। तथा च 'न कवतेर्यङि' (७-४-६३) इत्यत्र न्यासः—'सत्यपि शब्दार्थत्वे भिद्यत एवैषामभिधेयम्। तथा †च कवतिरव्यक्तशब्दे वर्तते। उष्ट्रः कोकूयत इति। कुवतिरार्तस्वरे। कुवते पीडित इति। *कौतीति शब्दमात्र' इति। क्षीरस्वामिमैत्रेयरक्षितौ[१]$ च 'कु शब्द' इत्यत्रैतामेव व्यवस्थामास्थाते। सर्वत्रैवं प्रयोगविशेषादर्थविशेषो[२]ऽप्यनेकार्थवदास्थेयः‡। न पुनः पाठ एव शरणम्॥

## रवते रौति शब्दने॥ २३॥

'रुङ् गतिरेषणयोः'। अत्र च रेषणस्य वृकशब्दत्वाच्छब्दन इत्येकं नेतव्यम्[३]। एतच्च गतेरप्युपलक्षणम्। 'रुङ् शब्द' इत्येव तु पाठे सति शक्यमक्लेशेन नेतुम्। यथा त्वत्र

१. अत एतामेव तदनुसारी देव आदद्रे. २. न केवलमर्थभेदः, किन्तु अर्थैक्येऽपि तद्गतविशेषोऽप्यवसातव्यः प्रयोगभेदात्. ३. रेषणपरतया समर्थनीयम्.

†'हि' इति गपुस्तके पाठः. *'कौतिः शब्द' इति गपुस्तके पाठः. $'क्षीरस्वामी मैत्रेयरक्षितश्च' इति घपुस्तके पाठः. ‡'र्थत्ववदास्थेयः' इति गपुस्तके पाठः.

क्षीरस्वामी — "रेषणं हिंसाशब्दः । रवते । अदादौ 'रु शब्दे' रौति" इति, यथा चादादौ "रु शब्दे । रौति । भ्वादौ 'रुङ् गतिरेषणयोः' रवत" इति, तथा चायं पाठो नैवास्तीति गम्यते ॥

**यावयेत जुगुप्सायां मिश्रणे यौति बन्धने ।**
**युनाति च युनीते च**

'यु जुगुप्सायाम्' । चितादित्वात् तङ् । यदाह — 'आकुस्मादात्मनेपदी' इति । 'चित संचेतन' इत्याद्याः 'कुस्म' इत्यन्ता धातव आत्मनेपदिन इत्यर्थः । " 'युज कुत्सायाम्' इत्येके । योजयते" इति क्षीरस्वामी । 'यु मिश्रणे' । अदादिः । 'युञ् बन्धने' । क्र्यादिः ॥

**स्तुत्यां नुवति नौति वा ॥ २४ ॥**

'णू स्तवने' तुदादिर्दीर्घान्तः । तथा च 'गाङ्कुटादि' (१-२-१) सूत्रे 'नूत्वा धूत्वा' इति भाष्यम् । 'णु स्तवने' । अदादिः ॥

**प्रेरणे सुवति प्राणिप्रसवे सूयते भवेत् ।**
**प्राणिगर्भविमोकेऽर्थे सूते शे श्यनि शब्लुकि ॥ २५ ॥**

'षू प्रेरणे' । 'षूङ् प्राणिप्रसवे' । अप्राणिप्रसव इत्येके । तथा च क्षीरस्वामी प्रसूनं पुष्पमिति निष्ठानत्वमुदाहृत्याह —'अत एवाप्राणिप्रसव इत्याहुः' इति । न्यासकारस्तु 'स्वरतिसूतिसूयतिधूञूदितो वा' (७-२-४४) इत्यादिषु पूङ्विषयेषु प्राणीत्यत्र पपाठ । धातुपाठाश्चैवमेव बहुलमुपलभ्यन्ते । यथा 'प्रसूनं कुसुमं सुमम्' इत्यत्र कविकामधेनुः —" 'पूङ् प्राणिप्रसवे' । क्षपणकमतेन,† वृक्ष-

†'मते' इत्येव घपुस्तके पाठः.

स्यापि प्राणित्वम् । 'स्वादय ओदित' इति क्तस्य नत्वम्" इति, तथा 'अतं एवे'त्युक्तयुक्तिश्च प्रत्युक्ता । तत्र च क्षपणकग्रहणं तेषामहिंसायां सूक्ष्मेक्षिकाभिमानात्; न पुनरपरेषामनभिमतोऽयमर्थ इति । तच्चैतत् प्राणित्वमयुक्तम्, यतो लोक इव व्याकरणेऽपि प्रसिद्धिवशादेव तत्र तत्र प्राण्यप्राणिव्यवस्थास्थीयते । लोके चाप्राणित्वं वृक्षादेः प्रसिद्धम् । तथा च 'ऊङुत' (४-१-६६) इत्यत्र 'अप्राणिजातेश्चारज्ज्वादीनाम्' इति वार्तिकं प्रकृत्यालाबूः कर्कन्धूरित्युदाहरता भाष्यकारेणापि स्थीयते[2] । अत एव मैत्रेयरक्षितेन 'प्राणिग्रहणमतन्त्रम् । अप्राणिप्रसवेऽपि वर्तते । प्रसूनं धान्यमिति' इत्युक्तम् । 'षूङ् प्राणिगर्भविमोचने' ॥

धूनयति धवति धवते धुनोति धुनुते धुनाति च धुनीते ।
धूनोति धूनुते स्युः पदानि कम्पे विधूनने धवति ॥ २६॥

'धूञ् कम्पने' । युजादिः प्वादिः स्वादिश्च । तत्राद्ये प्रीञ्[3]वत् त्रैरूप्यम् । क्षीरस्वामी तु 'धावयतीत्येके' इति । मैत्रेयरक्षितादयश्च ह्रस्वान्तं चान्त्यमाहुः । तथा च 'घृसृधुवृषिप्रच्छिज्वरित्वरिभ्यः कित्' इति धुञो धुनिशब्दो भोजदेवेन व्युत्पादयाञ्चक्रे । एभ्यो धातुभ्यः संज्ञायां गम्यमानायां निन् प्रत्ययो भवति । स च किदित्यर्थः । घृणी रश्मिः । सृणिरङ्कुशः । धुनिर्नदी । वृष्णी राजा, यद्वंश्या वृष्णयः । पृश्निरल्पतनुः । 'ग्राहिज्या' (६-१-१६)

१. 'अत एवाप्राणिप्रसव इत्याहुः' इति क्षीरस्वाम्युक्तयुक्तिः, चकाराद् 'अप्राणिप्रसवे' इति पाठश्च. २. लोकप्रसिद्धिर्नातिलङ्घ्यते इत्यर्थः. ३. प्रीञ्धातुर्विंशश्लोके विवृतः. ४. एकेषां मते नुग्विधौ 'धूञ्प्रीणोरि'ति पाठात् प्रीणातिसाहचर्येण क्रैयादिकस्यैव धूञो ग्रहणं, न तु चौरादिकस्य.

इति सम्प्रसारणम् । 'च्छ्वोः शूडनुनासिके च' (६-४-१९) इति च्छस्य शः । जूर्णिर्वृद्धः । तूर्णिः शीघ्रः । 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (६-४-२०) इत्युपधावकारयोरूठ् । प्रयोगश्च 'न स्नात्वा वासो धुनुयात्' 'ऊर्ध्वं धूनोति वायुर्विवृतशवशिरःश्रेणिकुञ्जेषु गुञ्जन्' इत्यादिर्भूवादि (१-३-१) सूत्रे सुधाकरेण दर्शयाम्बभूवे§ । सर्वथापि—

'धूनयति धवति धवतेऽधुनाद् धुनीते च धूनुतेऽधूनोत् ।
धुनुतेऽधुनोदिति स्युः'

इत्यनेन क्रमेण पठितुं युक्ततरम् । 'धू विधूनने' । तुदादिः ॥

**श्वि पुनाति पुनीते स्तां पवले पवते ङितः ।**

'पूञ् पवने' । 'पूङ् पवने' ॥

**प्रसह्य हृत्यां+ हरणे जहर्त्ति* हरते हरेत् ॥ २७ ॥**

'हृ प्रसह्य हरणे[2]' । जुहोत्यादिः । 'हृञ् हरणे' । तत्र चाद्यो घृप्रभृतित्वाच्छान्दसः । स च जिहर्तीति दृश्यते—'अयं स्रुवोऽभिजिहर्ति होमान्' इति । 'भृञामित्' । 'बहुलं छन्दसि' (७-४-७८) इत्यभ्यासस्येत्वम् । घृप्रभृतीनां छान्दसत्वम् 'अर्तिपिपर्त्योश्च' (७-४-७७) इत्यत्र भाष्यतद्व्याख्यानयोर्व्यक्तम् ॥

**भृञो बिभर्ति बिभृते भरते भरतीत्यपि ।**

---

१. स्वाद्युदाहरणानां विजातीयाव्यवधानं हि स्वादिविषयपक्षभेदप्रतिपत्तौ सौकर्यमादधाति; यथास्थितपाठस्तु प्वादिधातुना व्यवधानान्न तथेति तात्पर्यम्.
२. 'करणे' इत्येव माधववृत्त्यादिषु दृश्यते.

---

§'यामासे' इति गपुस्तके पाठः. +'हृत्याम्' इति गपुस्तके पाठः. *'जिहर्ति' इति कपुस्तके पाठः.

**ऋदन्तस्य भृणातीति भर्त्सने श्नि तथा भरः ॥ २८ ॥**

'डुभृञ् धारणपोषणयोः' । जुहोत्यादिः । टुभृञित्येके । तथा च भृत्रिममित्युक्त्वा 'भरथुरिति केचिदि'ति मैत्रेयरक्षितः । क्षीरस्वामी तु 'टुभृञिति द्रमिडाः । भरथुः' इति । सुधाकरः पुनरथुज्विधौ टुभृञित्युक्त्वाह—डुभृञं द्रमिडाः पठन्ति । तेन भृत्रिमं भरथुरिति द्वयमिच्छति नन्दी' इति । टुडुभृञित्यनुबन्धद्वयमपि शाकटायनः । तन्मते हि 'अप्रयोगीद्' इतीत्त्वम् । अत्रामोघा—'इह शास्त्रे उपदिश्यमानो वर्णः समुदायो वा यो लौकिके शब्दप्रयोगे न दृश्यते, स इत्संज्ञो भवति । अत एव चास्य प्रयोगाभावः सिद्धः । उपदेशस्तु कार्यार्थं' इति । तत्र च भरणेन निर्वृत्तं भृत्रिममिति । 'ड्वितः क्त्रिः' (३-३-८८) इति क्त्रिः । 'क्त्रेर्मब् नित्यम्' इति मप् । भरणं भरथुः । 'ट्वितोऽथुच्' (३-३-८९) इत्यथुच् । 'भृञ् भरणे' । 'वॄ वरणे । भॄ भर्त्सने च' । प्वादिः । "'वॄ भॄ भरणे' । 'भॄ भर्जने च' भर्जनं पाक" इति क्षीरस्वामी । स चात्र भर्जनाख्यः पाकभेद एव प्रसिद्धो बोद्धव्यः । 'ऋजि, भृजी भर्जने' इत्यत्र च स एवाह—'भर्जनं पाकप्रकार' इति । [1]भरणपाठे च भरस्य भारपर्यायत्वौचित्यं* व्यक्तम् । स[2] च ऋदन्तपाठफलम् । 'ऋदोरप्' (३-३-५७) इत्यप् ।

**ध्रियते स्यादवस्थाने धृङोऽवध्वंसने पुनः ।**
**धरते धारणेऽर्थे तु धरते धरतीत्युभे ॥ २९ ॥**

---

१. 'भॄ भरणे' इति क्षीरस्वामिपाठे. २. भरश्च भरशब्दश्चेति यावत्.

---

* 'यत्वादौचित्यम्' इति घपुस्तके पाठः.

'धृङ्वस्थाने'। तुदादिः। 'रिङ्शयग्लिङ्क्षु' (७-४-२८) इति रिङ्। इयङादेशः। 'धृङ्वध्वंसने'। आविध्वंसन इति क्षीरस्वामी। अपरेऽप्येवं बहवः। 'धृञ् धारणे'। 'धृ धारणे' इत्यपि चुरादौ क्षीरस्वामी। तत्र धारयति धारयते। 'चुरादेराकृतिगणत्वाद् धारयती'ति हेमचन्द्रः। न्यासे तु 'धारेरुत्तमर्ण' (१-४-३५) इत्यादिषु ध्रियतेर्हेतुमण्णिच्येव धारिर्व्युत्पाद्यते। 'षिद्भिदादिभ्योऽङ्' (३-३-१०४) इत्यत्र 'धारा प्रपातन इति वक्तव्यम्। धृतिरन्या' इति भाष्यम्। तत्र च धृतिरन्येति ब्रुवता 'ऋदृशोऽङि गुणः' (७-४-१६) इति गुणे कृते दीर्घत्वनिपातनेन धरतेरेव धारेत्यभिप्रेयते,[1] न पुनः समानार्थत्वेऽपि धारयतेः। यदि च सोऽपि चुरादिष्वपठिष्यत, धारणान्येत्येवावक्ष्यत; कृतं निपातनक्लेशेन॥

**गतौ [2]ससर्ति सरति श्लुशपोर्धावति केचित्।**

'ऋ सृ गतौ' घृप्रभृतित्वाच्छान्दसोऽन्त्यः[3]। स च सिसर्तीति दृश्यते। 'प्र बाहवा पृथुपाणिः सिसर्ति' इति। 'सृ गतौ'। 'सर्तेर्धावादेशो वेगितायां गतौ' इति वार्त्तिकेन सञ्जातवेगायां गतौ शपि धौभावः। क्षीरस्वामी तु चुरादौ 'घृ स्रावण' इति पठित्वा "'घृ सृ आवरणे' इति पूर्वे पेठुः। 'घर स्रावणे' इति दुर्ग" इति। सरतिसिसर्त्योश्च स एवाह—चुरादौ सारयति' इति॥

---

१. तथा ब्रुवता धारयतेरेव धारेत्यभिप्रेप्यतेत्यर्थः. एवं तु वृद्ध्यैव णिनिमित्तया दीर्घत्वस्य सम्पत्तेर्निपातक्लेशोऽपि परिहृतो भवतीत्याह—कृतमिति. २. विशेषे. स च वेगिता गतिः. ३. आद्यस्तु समनन्तरं व्याख्यास्यते.

**तत्रेयर्त्यृच्छतीत्यर्त्तेः श्वि गतौ स्याद्दणाति *तु ॥ ३० ॥**

तत्रेति पूर्वोक्त एव विषय इत्यर्थः। तेन गतौ श्लुशपोः अर्त्तेः 'ऋ सृ गतौ' 'ऋ गतिप्रापणयोरि'त्यनयोरियार्त्ति ऋच्छतीति भवतीति वाक्यार्थः। तत्र चाद्ये शप्श्लुद्विर्वचनोरदत्वहलादिशेषेषु कृतेषु 'आर्त्तिपिपर्त्योश्च' (७-४-७७) इत्यभ्यासस्येत्वम्। 'अभ्यासस्यासवर्णे' (६-४-७८) इतीयङादेशः। ततो गुणः। अस्य चार्त्तेर्घृप्रभृतित्वेऽपि भाषायामपि प्रयोग इष्यते। तच्च 'बहुलं छन्दसि' (७-४-७८) इत्येवेत्वे सिद्धे अर्त्तेः पृथगित्वविधानसामर्थ्यादवसीयत इति 'अर्त्तिपिपर्त्योश्च' (७-४-७७) इत्यत्र भाष्ये स्थितम्। अन्त्ये 'पाघ्राध्मा' (६-३-७८) इति ऋच्छादेशः। 'ऋ गतौ'। भ्वादिः॥

**हिंसाकरणयोः श्नात्रौ कृणोति कृणुते कृञः।**
**करोति कुरुते द्वे द्वे सम्पद्येते§ पदे क्रमात्॥ ३१ ॥**

'कृञ् हिंसायाम्'। 'डुकृञ् करणे'। तथा 'कृञ् करणे' इति भूवादौ क्षीरस्वामी। करोति कृणोति करतीति वा कारुरिति च कस्यांचिदुणादिवृत्तौ दृश्यते। न्यासकारस्तु 'कः करत्करतिकृधिकृतेष्वनदितेः' (८-३-५०) इत्यत्र करतौ [1]व्यत्ययेन शपं ब्रुवन्[2]नैतमनुमन्यते॥

**भक्तौ वृणीते वरणे वृणोति वृणुते वृञः।**
**वृञ आवरणे वा णौ वारयेद् वरते वरेत्॥ ३२ ॥**

'वृङ् सम्भक्तौ'। क्र्यादिः। 'वृञ् वरणे'। स्वादिः। 'वृञ्

---

१. 'व्यत्ययो बहुलम्' (३-१-८५) इति विकरणव्यत्यासेन. २. भूवादिम्.

---

*'च' इति कपुस्तके पाठः. §'म्वध्येते' इति खगपुस्तकयोः पाठः.

आवरणे' । अत्र क्षीरस्वामी—"आवारयति आवरति आवरते । स्वादौ वृणुते वृणोति । क्र्यादौ वृणीते । तुदादौ 'वृङ् सम्भक्तौ' व्रियते" इति ॥

ज्ञाने गारयते गिरेन्निगरणे शब्दे गृणाति त्रयं
युक्तं ग्रो गरतीति सेकविषये ह्रस्वान्तधातोः शपि ।
सेके प्रस्रवणे क्रमाच्छपि णिचि स्यातां घरेद् घारयेद्
यद्दीप्तौ क्षरणे जिघर्ति तदिदं केचिद्विदुश्छान्दसम् ॥

'गॄ विज्ञाने' । चितादिः । कॄ इति चन्द्रः । 'गॄ निगरणे' । तुदादिः । निपूर्वताप्राचुर्योपदर्शनार्थो निः । 'अचि विभाषा' (८-२-२१) इति लत्वविकल्पाद् गालयते गिलेदित्यपि द्रष्टव्यम् । 'गॄ शब्दे' । क्र्यादिः । एवं त्रिषपठितस्य गॄ इत्येतस्यैतत्त्रैरूप्यं युक्तम् । अन्त्ययोरेव धात्वोः प्रसिद्धत्वाद्रूपद्वयमेवेति मन्दैर्मा शङ्कीत्याशयः । 'गृ, घृ सेचने' । यथा तु 'तृज्वत्क्रोष्टुः' (७-१-९५)इत्यत्र भाष्यम —'[1]अविशेषाविहिताः शब्दा नियतविषया दृश्यन्ते । घरतिरस्मायविशेषेणोपदिष्टः । स घृतं घृणा घर्म इत्येवंविषय' इति, तथा घरेदिति ने[3]ष्यते । देवस्तु मैत्रेयरक्षितेनैकीयमतत्वेन घरतीत्युदाहृतमुपलभ्यैतदभ्यधात् । 'घृ प्रस्रवणे' । 'घृ स्रावण' इति क्षीरस्वामी । 'घृ क्षरणदीप्त्योः' । जुहोत्यादिः । अत्र मैत्रेयरक्षितः—

---

१. अनुपसन्दानबोधितशक्तिका अपि शब्दा उपसन्दानोपजीविसामर्थ्याः प्रयोगतोऽवसीयन्ते इत्यर्थः. २. घरतिर्हि सेचने सामान्यतः पाठितोऽपि क्तनग्मन्प्रत्ययोपसन्दानेनैव सर्पिर्दयोष्मार्थोपसन्दानेनैव वा स्वार्थबोधक इत्यर्थः. ३. पद्धत्यादावौपसन्दानिकशक्तियोगिनो गत्यर्थहन्तेरिव घरतेरपि तिङ्विषयत्वाभावादिति भावः.

"'जन जनने' जजन्ति । 'गा स्तुतौ' । जिगाति । 'छन्दसि' इति च्छान्दसावेतौ । घृप्रभृतयोऽपि च्छान्दसा इति केचिद्" इति । (गा स्तुतौ?) तत्स्थ एवात्र ग्राह्यः केचिच्छब्दो भाष्यानुसारिण इत्येवं व्याख्येयः । तत्रापि जिघर्तीति च्छन्दसि दृश्यते । 'वरिष्ठं वज्रमाजिघर्ति मायनी' इति ॥

**प्रीतौ पृणोत्यृदन्तस्य व्यायामे प्रियते पृङः ।**

'पृ प्रीतौ' । स्वादिः । 'पृङ् व्यायामे' । तुदादिः । व्याप्रियते ॥

**मृणाति हिंसार्थे प्वादेर्मृङस्तु म्रियते पदम् ॥ ३४ ॥**

'कॄ हिंसायाम्' । 'मॄ इत्येके' इति मैत्रेयरक्षितः । क्षीरस्वामी तु 'मॄ हिंसायाम्' इत्यपि पृथक् पपाठ । किन्तु बॄ इति पवर्गतृतीयोपधतया मैत्रेयरक्षितपठितस्य स्थाने मॄ इति । 'मृङ् प्राणत्यागे' । तुदादिः ॥

**स्तॄञः श्नि च्छादने प्वादेः स्तृणीते च स्तृणाति च ।**
**श्नावृदन्तस्य तत्रैव स्तृणोति स्तृणुते स्तृञः ॥ ३५ ॥**

'स्तॄञ् छादने' । 'स्तृञ् छादने' ॥

**दरेद् दृणाति द्रियते क्रमाद् भीदारणादरे ।**

'दॄ भये' । घटादिः । अत्र मैत्रेयरक्षितः—"'दॄ विदारणे' । क्र्यादिः । तस्य मित्त्वार्थः पाठः । धात्वन्तराभ्युपगमे दरतीत्येक" इति । धनपालहरियोगिदुर्गचन्द्रास्तु दरतीत्येवाहुः§ । क्षीर-

१. घृप्रभृतिगणान्ते पठितस्य छन्दसीत्यस्य तद्गणीयेषु सर्वेषु सम्बन्धौचित्यादिति भावः. २. भाष्यं च 'अर्तिपिपर्त्योश्च' (७-४-७७) इति सूत्रस्थम्. ३. समाहारद्वन्द्वनिर्देशोऽयम्.

§'वमाहुः' इति घपुस्तके पाठः.

स्वामी त्वाह—"'दॄ भये'। दरति । क्र्यादौ 'दॄ विदारणे'। तस्यैव मित्त्वार्थ इह पाठ इत्येके । दिवादौ दीर्यत इति पञ्चिका । कर्मकर्तरि दीर्यत इत्येके" इति । धनपालशाकटायनौ तु क्र्यादौ च 'दॄ भये' इत्येवाहतुः । 'दृङ् आदरे'। तुदादिः । आद्रियते ॥

**पॄणाति पूरणे श्लौ तु पिपर्त्ति णिचि पारयेत् ॥ ३६ ॥**

'पॄ पालनपूरणयोः' । प्वादिः । श्लौ त्वयं ह्रस्वान्तः । तथा च 'तं रोदसी पिपृतं सत्यवाचम्' इति श्रूयते । मैत्रेयरक्षितस्तु ह्रस्वान्तं पठित्वा 'दीर्घान्तोऽयमित्येके' इत्याह । तत्फलभेदश्च† पिपृतः पिप्रति पिपूर्त्तः पिपुरतीति । तत्र च 'उदोष्ठ्यपूर्वस्य' (७-२-१०२) इत्युत्वं रपरत्वं च । 'हलि च' (८-२-७७) इति दीर्घः । क्षीरस्वामी तु—दीर्घान्तं पठित्वा 'ह्रस्वान्तोऽयमिति नन्दी' इति । 'पॄ पूरणे' । अत्र च स एवाह—'पॄ इति दुर्गः । पारयाति परति' इति । एतच्च चुरादिणिचोऽनित्यत्वाश्रयेण ॥

**वृवॄञोराञितो धातोर्वृणाति वरणे भवेत् ।**
**वृणाति च वृणीते च वॄञस्तत्रार्थ इष्यते ॥ ३७ ॥**

'वॄ वरणे' । 'वॄञ् वरणे' । प्वादिः । वृवॄञोरिति निर्धारणे षष्ठी । तत्र चाद्यं पवर्गतृतीयादिं बहवः पठन्ति । 'बॄ भरण' इति क्षीरस्वामिशाकटायनौ ॥

**सिद्धे पदद्वये वॄञो ञित्त्वाद् यदाञितो वचः ।**
**फले तत् कर्त्रभिप्राये परस्मैपदसिद्धयें ॥ ३८ ॥**

---

१. अस्यार्थस्तु दीर्घान्तस्येवेत्यर्थः. २. न तु युजादित्वेन.

---

†'दं च' इति गपुस्तके पाठः.

वृञो ञित्त्वाद्वृणाति वृणीते इति सिद्धे वॄ इत्यञित्पाठः कर्त्रभिप्राये क्रियाफले परस्मैपदार्थः ॥

**जॄणाति जीर्यति जरत्येकार्थे जारयत्यपि ।**

'जॄ वयोहानौ' । सा च यौवनादेस्त्यागः । प्वादिर्युजादिश्चायम् । तत्राद्ये 'धॄ इत्येक' इति मैत्रेयरक्षितः । अन्त्ये तु क्षीरस्वामी—'जारयति जरति । दिवादौ जीर्यति । क्र्यादौ जॄणाति । ज्रीति च नन्दी । ज्राययति ज्रयति । क्र्यादौ जॄणाति' इति । 'जॄ झॄष् वयोहानौ' । दिवादिः । अस्य तु हेतुमण्णिचि । 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वाज्जरयतीति द्रष्टव्यम् । 'जनी प्रादुर्भावे' 'क्नसु ह्वरणदीप्त्योः' 'रञ्ज रागे' इत्येते जीर्यतिश्चाम्रूपान्ताश्च धातवो मितो भवन्तीत्यर्थः ॥

**कृणन् कृणीते हिंसायां विक्षेपे किरतीति शे ॥ ३९ ॥**

'कॄञ् हिंसायाम्' । प्वादिः । 'कृञित्येके' इति क्षीरस्वामी । तिङ्प्रकरणेऽपि शत्रन्तोदाहरणं वृत्तानुरोधात् । 'कृणाति च कृणीते च हिंसायां किरतीति शे' इत्यनुक्तिः 'परस्मैपदाद्येवात्र विवक्षितमि'ति प्रागुक्तमर्थं[1] बालानां व्यङ्क्तुमिति गमयितव्यम् । एवं 'बध्नन्[2] बीभत्सते बन्ध' इत्यत्रापि बन्धे बीभत्सनेऽबध्नादित्यनुक्तिर्नेतव्या । 'तॄ कॄ हिंसायाम्' इत्यपि प्वादावेव क्षीरस्वामिमैत्रेयरक्षितौ । तत्फलं तु वॄवद्[3] द्रष्टव्यम् । 'कॄ विक्षेपे' । किरतीति ॥

**तृसौ चकेत् प्रतीघाते तृसौ च चकते शपि ।**

---

१. भूधातुव्याख्यानावसरोक्तम्. २. इदं १२०तमश्लोके. ३. कर्त्रभिप्राये क्रियाफले परस्मैपदसिद्धिरूपं फलं वृधातोरुक्तम् अष्टात्रिंशे पद्ये.

'चक तृप्तौ'। घटादिः। 'चकृ तृप्तौ प्रतीघाते च'। क्वचित् पुनः पठ्यते—

प्रतीघाते च तृप्तौ च चकते चकतीति तु।
तृप्तिमात्रे चकेरस्य मित्त्वाच्चकयतीति णौ॥

इति। तयोश्च पाठयोस्तृप्ताविति तृप्तिमात्र इति च घटादिपाठपरम्[1]। शेषं च प्रदेशान्तरपाठपरम्[2]। ततश्च यद् घटादौ च[3] शाकटायनेनोभयार्थत्वमुक्तं, यच्च क्षीरस्वामिना घटादावुभयार्थत्वमन्यत्र तृप्त्यर्थत्वं, तदपि संगृहीतं भवति। धनपालः पुनरात्मनेपदिनं 'चक तृप्ताव'त्येव पठित्वा तस्यैव 'चकृ तृप्तौ प्रतीघाते च' इति घटादौ 'घटादयो मित' इति मित्संज्ञार्थं पाठं मन्यमानस्तत्राप्यात्मनेपदमेवोदाजहार[4]॥

**दर्शने लोकते लोकेर्भाषार्थे णौ तु लोकयेत्॥ ४०॥**

'लोकृ दर्शने'। लोकृ भाषार्थः*। अस्माच्च सकर्मकादेव णिच् स्यात्। यदाह—'आस्वादः सकर्मकाद्' इति। अत्र मैत्रेयरक्षितः—"'स्वाद आस्वादने' आ एतस्मात् स्वादः सम्भवि-

१. घटादिपाठतात्पर्यकम्. एवञ्च योऽन्यैस्तृप्तावेव केवलायां धातुः पठितः, तस्यार्थाद् घटादेः 'चकेद्' इति भवति कस्मिन्नर्थे तृप्तौ प्रतीघाते चेति 'तृप्तौ चकेद्' इत्यस्यार्थो वक्ष्यमाणशाकटायनानुरोधी बोध्यः. तथा 'चकतीति तु तृप्तिमात्रे' इत्यस्यापि. २. भूवादिपाठतात्पर्यकम्. एवञ्च योऽन्यैस्तृप्तिप्रतीघातयोर्धातुः पठितः, तस्यार्थाद् भ्वादेः 'चकते' इति भवति कस्मिन्नर्थे तृप्तावेव केवलायामिति 'प्रतीघाते तृप्तौ च चकते' इत्यस्यार्थो वक्ष्यमाणक्षीरस्वाम्यनुरोधी द्रष्टव्यः. तथा 'प्रतीघाते च तृप्तौ च चकते' इत्यस्यापि. ३. चादन्यत्र. ४. परस्मैपदप्रकरणानुवादसामर्थ्यमनादृत्येति शेषः.

*'र्थे'. इति गपुस्तके पाठः.

कर्मकादेव णिज् भवतीति मन्तव्यम् । असम्भाविकर्मकत्वे व्यावृत्तिः । आङः स्वाद एव सकर्मकादित्येके" । इति । तत्र च सम्भाविकर्मकत्वकथनेन सत्यसति वा कर्मणः प्रयोगे तत्सम्भवमात्रेण णिज् भवतीत्युक्तं भवति । *कर्मासम्भवः पुनरनेकार्थत्वेनार्थान्तरवाचितायां यथाप्रयोगं द्रष्टव्यः । क्षीरस्वामीत्वाह—'आङ्-पूर्वात् स्वादतेः सकर्मकाण्णिज् भवति । अस्ति कर्म यस्य स सकर्मकः[1] । आस्वादं धातुर्णिचमुत्पादयति । 'पय आस्वादयति' इति । धनपालश्च 'आस्वादयति क्षीरम्' इत्युदाहरन्नत्रैवानुकूलः[2] । तत्र चाभिविधिपक्ष एव युक्तः प्रत्यवभासते, इहाप्याङः पूर्वापरेष्विवाभिविध्यर्थताया एवौचित्यात् । 'आ कुस्मादि'ति हि पूर्वत्राभिविधावाङ् दृष्टः । 'आधृषाद्वेति' 'आगर्वादि'ति च समनन्तरमेवैवं द्रक्ष्यते । तत्रायमपि तन्मध्यपाती तच्छायश्चाङ् तदर्थ एव व्यक्तमवभासते । तदत्र[3] पक्षान्तरं व्याचक्षाणानामाशयश्चिन्त्यः । अन्ये तु 'आस्वदः सकर्मकाद्' इत्याहुः । 'ग्रस ग्रहण' इत्यारभ्य 'ष्वद आस्वादन' इत्येवमन्ता‡ [4]ये धातवः पठ्यन्ते, [5]तथा च 'पूरी आप्यायने ष्वदास्वाद' इति श्लोकधातुपाठः, संवरण इति तु क्षीरस्वामिधनपालशाकटायनाः, 'ष्वद आस्वादन' इत्यत्र[6] च क्षीरस्वामी — 'स्वदते', चुरादौ 'स्वद संवरणे स्वादयति' इति, तेभ्य एतेभ्यः सम्भविकर्मकेभ्य एव णिज् भवतीत्यर्थः । एतच्च

१. सकर्मकः प्रयुज्यमानकर्मक इत्यर्थः. तेनाप्रयुज्यमानकर्मको व्यावर्त्यते. २. क्षीरस्वामिपक्षे एव. ३. आङ्विषये. ४. 'ये' इत्यस्य 'तेभ्य एतेभ्य' इति वक्ष्यमाणेनान्वयः. ५. स्वदधातोर्ह्रस्वोपधत्वे प्रमाणमर्थविषयकपक्षभेदानुग्राहि दर्शयति —तथाचेत्यादि. ६. भ्वादौ.

‡'न्ता धा' इति घपुस्तके पाठः. *'कर्मसम्भवः' इति गपुस्तके पाठः.

सकर्मकत्वमन्येष्वपि भाषार्थेषून्नेयम् । अत्र चोत्तरत्र च भाषार्थग्रहणे 'भासार्थ इत्येक' इत्यपि द्रष्टव्यम् । तथा च 'पटपुटे'त्यादौ 'वृतु वृधु भाषार्थाः' इत्यन्ते दुण्डकधातुपाठे मैत्रेयरक्षितः— 'भासार्था दीप्त्यर्था इत्येक' इति । क्षीरस्वामी च—'भासा दीप्तिरर्थो येषां ते भासार्थाः' इति । 'भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः । स्त्रीवेषधारी पुरुष' इत्यत्र कविकामधेनुकारश्च दण्डकधातुमेवाश्रित्याह— 'कुंसिर्भासार्थः । स्त्रीरूपधारित्वाद् भ्रुवा कुंसयति पुरुषत्वमिति भ्रुकुंसः' । इति । तत्र* भासार्थपक्षे सकर्मकत्वे यत्नः कर्तव्यः । धनपालः पुनरन्यथैवामुं दण्डकं व्याचष्टे — 'एते पटादयः सर्वे णिचमुत्पादयान्ति । अन्ये च ये भासार्था धातवः, ते च णिचमुत्पादयान्ति' इति । अत्र चाञ्जसैवानाञ्जस्ये सत्यंव्या(सिप्र?)प्त्यपनीत्याशैव शरणम् ॥

अङ्क लक्षण इत्यस्य भवेदङ्कयतीति णौ ।
इदितस्त्वङ्कते तत्र कुटिलायां गतावकेत् ॥ ४१ ॥

'अकि लक्षणे' । तत्रेति लक्षणे । 'अक अग कुटिलायां गतौ' ॥

णिचि बुक्कयतीति स्याद् भाषणे शपि बुक्कति ।

'बुक्क भाषणे' । 'बुक्कनं श्ववृकध्वान' इति तु यादवप्रकाशः । 'बुक्क आभाषण' इति शाकटायनः । अन्ये तु क्षीर-

१. स च भासधातौ णिजर्थान्तर्भावना. २. धनपालव्याख्याने. ३. पूर्वापरधातुष्वास्थितस्यार्थनिर्देशस्य पटादिषु परं त्यागानौचित्याद् धनपालव्याख्यानस्यायुक्तत्वे सतीत्यर्थः. ४. 'बुक्कनं श्ववृकध्वाने भषणं भषितं शुनः' इति अन्तरिक्षकाण्डे शब्दाध्यायः.

*'तत्र तु' इति गपुस्तके पाठः.

स्वामी—'भषण इत्येके । बुक्कति श्वा' इति । मैत्रेयरक्षितश्चैवमेवोदाहार्षीत् ॥

**मर्षणे शीकयेच्छीकेत् सेचने शपि शीकते ॥ ४२ ॥**

'शीक आमर्षणे' । युजादिः । 'शीकृ सेचने' । अनुदात्तेत् । एतच्च शीकतीति मन्दैर्मा पाठीत्येवमर्थमुच्यते । अनुपात्ते त्वात्मनेपदाचिह्ने* परस्मैपदपाठ एव अन्यथापि वृत्ताविरोधिपाठसम्भवेऽपि शुद्धो बोद्धव्यो यथा बुक्कतीत्यादौ । 'सीकृ इत्यार्याः' इत्यपि धनपालः । तत्र चाद्यः पक्षः शीकर इति प्रयोगानुगुणः । योऽपि षोपदेशलक्षणे सीकृपाठ उक्तः, सोऽप्येवं प्रत्युक्तः । शीकृ गत्यर्थ इत्यप्येके । तत्स्थाने षेकृ इत्यन्ये । यदाह क्षीरस्वामी—'शीकृ, सेकृ, स्रेकृ, स्रकि, शाकि, श्लकि गत्यर्थाः । शीकेरर्थभेदात् पुनः पाठः । अत एव चन्द्रो नैनमध्यैष्ट । अन्ये षेकृ इति विकल्पेन षोपदेशकार्यार्थं पेठुः' इति ॥

**शङ्कते शाकि शङ्कायां शक्तौ शक्नोति मर्षणे ।**
**शक्यते शक्यतीत्येवं शपि श्नौ श्यनि च क्रमात् ॥ ४३ ॥**

'शकॢ शक्तौ' । 'शक विभाषितो मर्षणे' । विभाषित

१. वचनातिरेकेणात्मनेपदावसायेऽभ्युपायाभावादिति शेषः । अत एवैवञ्जातीयके स्थले सर्वत्र 'गत्यां तु लङ्घते' (४९ श्लो.) 'पृक्ते संपर्के' (९१ श्लो.) इत्यादौ 'अनुदात्तेद्' इति वक्ष्यते । 'तृप्तौ च चकते शपि', 'दर्शने लोकते लोकेः' (४० श्लो.), 'इदितस्त्वङ्कते तत्र' (४१ श्लो.), 'शङ्कते शकि शङ्कायाम्' इत्यत्र तु परस्मैपदपाठे वृत्ताविरोधसम्भवादभ्युपायादात्मनेपदं शक्यावसायमिति 'अनुदात्तेद्' इत्यात्मनेपदचिह्नं न कथितं; न च तज्जातीये स्थले वक्ष्यते 'सेचने सचते' (४६ श्लो.) इत्यादौ. २. शीकरानुगुण्येन तालव्यादित्वावधारणे.

*'पदभेदे' इति गपुस्तके पाठः.

इत्युभयपदी । रूढं चैतत् तन्त्रान्तरेष्वपि । क्षीरस्वामीत्वाह— 'सहनेऽर्थे शकिधातुर्विभाषितो विकल्पितः, पक्षे दिवादिः, पक्षे स्वादिरित्यर्थः । शक्यति शक्नोतीति । शाकटायनश्चेमुमेव विभाषितार्थम्, अस्य चोभयत्र पाठमात्रादेव सिद्धत्वाद्वैयर्थ्यं नूनं मत्वा 'शक मर्षण' इत्येव पपाठ; न पुनः 'शकी' इति । ईदित्वं ह्युभयपादित्वचिह्नं तन्मते । तच्चैतदुभयमपि बहुसम्मते यथोक्तेऽर्थे सम्भवत्ययुक्तमेव ॥

तकेत् तङ्केव्यथासङ्ख्यं हसने कृच्छ्रजीवने ॥ ४३½ ॥

'सहने' इत्यपरः पाठः । 'तक सहने' । क्षीरस्वामी पुनः सहन इत्युक्त्वा 'हसन इति दुर्ग' इति । यत्तु श्लोकधातुपाठे 'फक्क नीचैर्गतौ तक्क मर्षणे बुक्क भाषणे' । इति द्विककारस्ताकिः पठ्यते, तद् 'अचो यद्' (३-१-९७) इत्यत्रत्येन 'ताकिशसियतिजनीनामुपसङ्ख्यानम्' इति भाष्येण विरुध्यते । 'तकि कृच्छ्रजीवने' ॥

अन्वेषणेऽर्थे मृगयेत णौ यौ
मार्गेर्भवेन्मार्गाति मार्गयेच्च ॥

'मृग अन्वेषणे' । कथादित्वाददन्तः । ततश्चातो लोपस्य

---

१. क्षीरस्वाम्युक्तमुभयगणीयत्वमेव. २. इदं च वैयर्थ्यमिति च मत्वेत्यस्य कर्म. ३. दिवादौ स्वादौ च. ४. यथोक्ताविभाषितपदोपादानरहितात् पाठादेव. ५. यत् सूत्रयति शाकटायनः—'ञीदिदपवदानुपसर्गज्ञः' (१-४-६९) इति । ञित ईदितोऽपवदादेश्च कर्तरि फलेशे लस्य तङ् भवतीति च तस्यार्थः. ६. द्विककार एव तकिधातौ संति ततो यति ण्यति वा वृद्ध्यभावस्य तुल्यतया यत्प्रत्ययोपसंख्यानं व्यर्थं स्यादिति तत्साफल्यायैकककार एव धातौ भाष्यसम्मत्यवधारणादिति भावः.

'अचः परस्मिन् पूर्वविधौ' (१-१-५७) इति स्थानिवद्भावाल्लघूपधगुणाभावः। पदादित्वात् तङ्। यदाह—'आगर्वादात्मनेपदी' इति। 'पद गतौ' इत्याद्या 'गर्व माने' इत्यन्ता ये धातवः कथादिषु पठ्यन्ते, त आत्मनेपदिन इत्यर्थः। अत्र मैत्रेयरक्षितः—'मृग्यतीति कण्ड्वादिपाठात् केचिन्मन्यन्ते'। इति। मार्ग अन्वेषणे॥

**लिङ्गेर्गतौ लिङ्गति लिङ्गयेदि-**
**त्यस्यैव चित्रीकरणार्थवृत्तेः॥ ४४½॥**

लिङ्गिर्गत्यर्थः। लिगि चित्रीकरणे॥

**भाषणे लङ्घयेच्छोषे लङ्घेद् गत्यां तु लङ्घते॥४५॥**

लघिर्भाषार्थः। 'लघि शोषणे'। लघिर्गत्यर्थः। अनुदात्तेत्। लघि भोजननिवृत्तौ चेत्येके। तथा च क्षीरस्वामी—"लघिर्भोजननिवृत्तौ च गत्यर्थश्च। 'नवज्वरे लङ्घनीयः'" इति॥

**सेचने सचते तच्च समवाये सचत्यपि।**

'षच सेचने'। सेवने तु सचिरुक्तो निरुक्ते—'सिषक्तु[२], सचत इति सेवमानस्य' इति। अस्यैतौ वाचकावित्यर्थः। षच समवाये। तच्चेति सचते च। क्वचित्तु पठ्यते—

**सेचने समवाये च सचते सचाति क्रमात्।**

इति। तथा च 'अकथितं च'(१-४-५१)इत्यत्र हरदत्तः—केचित्तु परस्मैपादिभिः सह धातुमेनं पठन्ति। षच समवाये।

---

१. दिवादेराकृतिगणत्वात् क्षीयते मृग्यतीत्यादि सिद्धिरित्याहुरिति भट्टोजिदीक्षिताः. २. 'सिषक्तु सचत इत्येते नामनी सेवमानस्य' इति आचार्यभगवद्दुर्ग इदं व्याचष्टे.

रप लप व्यक्तायां वाचि' इति । तदेतत् 'ब्रुविशासिगुणेन च यत् सचत' इति भाष्यौचित्यादयुक्तम् । सचत इति सम्बध्यत इत्यर्थः, समवैतीति यावत् । एवं च 'षच सेचन 'इत्यस्यानुदात्तेतोऽनेकार्थत्वात् समवाये वृत्तिः' इति हरदत्तोक्तं प्रौढिवादमा[1]त्रम् । न्यासे च सचत इत्यस्य 'षच समवाये' इत्येव धातुरुक्तः[2] । एवञ्च परस्मैपदिषु 'षप समवाय' इति पान्तस्यैव पाठः । पान्तकाण्डं चैवमनुसृतं भवति । एवमेव च मैत्रेयरक्षितः शाकटायनश्च । क्षीरस्वामी तु [3]सप्त सप्तिरिति चोदाहृत्य 'सचेति चन्द्रः । सचति साचिव' इत्याह ॥

**णौ लोचयति भाषार्थे दर्शने शापि लोचते ॥ ४६ ॥**

लोचृ भाषार्थः । 'लोचृ दर्शने' । अनुदात्तेत् ॥

**कल्कने मुञ्चते मुञ्चेर्मोक्षे मुञ्चति मुञ्चते ।**
**प्रमोचने चुरादेर्णौ मोचयत्येष न त्वृदित् ॥ ४७ ॥**

'मच मुचि कल्कने' । 'कल्कनं दम्भः शाठ्यं च' इति मैत्रेयरक्षितः । कल्कनं दम्भः §कथनं च । मच मुचेति च चन्द्रः । मोचते । 'मुञ्चते' इति क्षीरस्वामी । मच मचीत्येके । तथा च 'मचि कल्कने' 'मचुङ् धारणोच्छ्रायपूजनेषु'* इति शाकटायनैः[4] । तेन ह्यनुदा-

---

१. समवाये पठितस्य परस्मैपदित्वपक्षे समवायार्थे 'सचत, इति भाष्यप्रयोगस्योपपत्तये हरदत्तेन कथितम्. २. न पुनरात्मनेपदसिद्धये 'षच सेचने' इति धातुरुक्तः । तथा च षचधातुः समवायार्थकस्तङ्योग्य एवाभिमतो न्यासस्येत्युन्नीयते. ३. 'सप्यशूभ्यां तुट् च' इति सपेः कनिन्प्रत्यये तुडागमे च सप्तन् शब्दः 'क्तिच्क्तौ च संज्ञायाम्' (३-३-१७८) इति सपेः क्तिचि सप्तिशब्दः. ४. अनेन चैवमुकारवान् धातुर्भ्वादौ त्यक्तः फलति । (एकीयपाठे शाकटायनीयपाठे च मकाराः सर्वे मुकारा एव पठ्यन्ते घपुस्तके)

---

§'कथनम्' इति गपुस्तके पाठः. *'धारणोदयपूजनेषु' इति गपुस्तके पाठः.

चेत्स्थाने तु ईदित्, तत्स्थाने[2] चोदित् क्रियते। धनपालश्चात्रैवानुकूलः। 'मुच्लृ मोक्षणे'। तुदादिः। 'शे मुचादीनाम्'(७-१-५९) इति नुम्। 'मुच प्रमोचने'। एष न ल्लृदिदिति। पूर्व एव लृदित्, न त्वयमिति पाठशुद्ध्यर्थमेतत्। तत्र चामुचदिति तुं लृदित्त्वफलम्। 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' (३-१-५५) इति च्लेरङ्॥

**णौ पञ्चयाति विस्तारे व्यक्तौ तु शपि पञ्चते।**

'पचि विस्तारवचने'। प्रपञ्चयति। विस्तार इत्येवैके। तथाच श्लोकधातुपाठः—'जुड प्रेरणवाची शुठालस्ये गज मार्जे च। शब्दार्थे पचि विस्तारे' इति। तथैव चन्द्रः। पचि व्यक्तीकरणे। पञ्चेति दुर्गः। अनुदात्तेत्॥

**वञ्चतीति गतावर्थे वञ्चयेत प्रलम्भने ॥४८॥**

'वञ्चु गत्यर्थः'। 'वञ्चु प्रलम्भने'। चितादिः[3]॥

**पूजायां णौ विभाषार्चेरर्चयत्यर्चतेऽर्चति।**
**भूवादौ पाठसामर्थ्यात् कर्तृगामिफलेऽर्चाति ॥४९॥**

'अर्च पूजायां' युजादिः स्वरितेत्। ततश्चार्चतीत्यपि तेनैव सिद्धेऽर्चेर्भूवादिपाठः कर्त्रभिप्रायेऽपि क्रियाफले परस्मैपदार्थः। शाकटायनस्य[4] त्वात्मनेपदी॥

**गतियाचनयोरञ्चत्यञ्चते णौ विशेषणे।**

१. 'तातांझथासाथांध्वमिल्वहिमहिङ् ङिदिदिच्छीयसंक्ष्णवपस्क्वानिविशः' (१-४-१) इति शाकटायनसूत्रम्। ङित इदितः शीयादेशात् संक्ष्णवादिभ्यश्च धातुभ्यः परस्य लस्य अन्ययुष्मदस्मात्सु प्रत्येकमेकद्विबहुषु यथासङ्ख्यं त आतां झ, थास् आथां ध्वम्, इल् वहि महिङ् इत्यादेशा भवन्तीति तस्यार्थः. २. तत्स्थाने= इदित्स्थाने. 'उदितः' (४-२-१९७) इति शाकटायनीयं सूत्रम् 'उदितो धातोर्नम् भवति' इत्यर्थकम्. ३. चितादिः=आकुस्मीयः. ४. एवं चास्य मते भूवादिपाठफलं क्रियाफलस्याकर्तृगामित्वेऽप्यात्मनेपदं सम्पद्यते.

**अञ्चयत्यञ्चतीत्येकं गतिपूजनयोरपि ॥ ५० ॥**

अत्र त्रिभि,स्त्रिभिः, पञ्चभिश्च पदैः क्रमाद्वाक्यत्रयं बालानां योजनीयम्। 'अञ्चु गतौ याचने च'। 'अचु इत्येके'। इति मैत्रेयरक्षितः। 'अचूञ् व्ययीगतौ' इति शाकटायनः। तेन चोदित्स्थाने ऊदित् क्रियते। आचि गताविति, अञ्चु गताविति च द्वौ धातू क्षीरस्वामी। तत्र चेदित्त्वफलमञ्च्यत इत्यादौ 'अनिदितां हल उपधायाः क्ङिति (६-४-२४)' इति नलोपाभावः। 'अञ्चु विशेषणे'। 'अञ्चु गतिपूजनयोः' ॥

**वक्तीति भाषणे वा णौ वाचयेद् वचतीति वा।**

'वच भाषणे'। अदादिर्युजादिश्च। तत्र चान्त्यः पारायणिकैर्नाधीयते इति क्षीरस्वामी। अन्यः पुनः 'अस्यतिवक्तिख्यातिभ्योऽङ्' (३-१-५२) इत्यत्र वृत्तौ परिभाषणे पठ्यते। तथापि परेरनधिकार्थत्वाद् भाषणमेवार्थः ॥

**पृणक्ति पृक्ते सम्पर्के यौ पर्चयति पर्चाति ॥ ५१ ॥**

पृङ्क्त इत्यपरः पाठः। 'पृची सम्पर्के' रुधादिरदादिश्च। अन्त्योऽनुदात्तेत्। अत्र भूवादिसूत्रे सुधाकरः— 'पृचि इति द्रमिडा §वेति नन्दिस्वामी। पृङ्क्त' इति। धनपालश्च सर्वं नन्दि-

---

१. अयं च पाठो 'यः पूर्णादुदचाति' (तैत्तिरीयसंहिता. का. ७. प्र. ९. अनु. १.) इत्यादिप्रयोगानुगुणः. २. ञित्त्वमीदित्त्वं चोभयपदित्वाय. ३. तथा च शाकटायनीयं— 'त्व्यूदितः' (४-२-१६१) इति। ऊदितो धातोः क्त्वाया इड् वा स्यादिति तदर्थः. ४. अनधिकार्थत्वात् = धात्वर्थातिरिक्तार्थशून्यत्वाद् धात्वर्थगतविशेषाद्योतकत्वादिति यावत्। 'अधिपरी अनर्थकौ' (१-४-९३) इति प्रसिद्धस्य परेरनर्थकस्यैवायं प्रयोगो, न तूपालम्भरूपविशेषद्योतकस्येति भावः.

---

§'नवेति' इति गपुस्तके पाठः.

स्वामिवदेवास्थित । 'युज, पृच संयमने' । सम्बन्धन इति क्षीर स्वामी ॥

रिचिर् विरेचने रिङ्क्ते रिणक्ति श्ने वियोजने ।
संपर्चने च यौ वा णौ रेचयत्यपि रेचति ॥ ५२ ॥

श्ने श्नमि । 'रिच वियोजनसंपर्चनयोः' ॥

शुच्यते शुच्यतीत्येवं पूतीभावे शुचेः श्यनि ।
शोके शोचति

'ईशुचिर् पूतिभावे' । 'शुच शोके' ॥

हिंसायां तर्जने परिभाषणे ॥ ५३ ॥
चर्चेत्यध्ययने त्वर्थे भवेच्चर्चयतीति णौ ।

'चर्च परिभाषणहिंसातर्जनेषु' । अत्र[1] धातुवृत्तिकाराः प्रत्येकमव्यवस्थितपाठशाता दृश्यन्ते । यदत्र सत्यं, तद्देवा ज्ञातुमर्हन्तीत्यप्याहुः । तत्र च प्राचुर्यात् 'चर्च परिभाषणे' इति नूनं पक्षमाश्रित्य देवः प्रववृते । 'चर्च अध्ययने' । क्वचित्तु पठ्यते—

अध्ययने चर्चयेच्चर्चतीति तु ।
हिंसायां तर्जने शे तु तथैव परिभाषणे ॥

इति । तत्र 'चर्च हिंसातर्जनयोः' । 'चर्च परिभाषणे' इति नूनं पाठौ । परिभाषणसन्तर्जनयोरिति चान्त्यं[2] बहवः पठन्ति । सर्वथापि '[3]स्वरभेदाद् द्विरुच्यते' इति '[4]शतुर्वा नुं शे स्यादिति तुदादिता' इति च वक्ष्यमाणनीत्या फलभेदो द्रष्टव्यः ॥

---

१. अत्र=धातुस्वरूपविषये. २. तौदादिकम् । 'जज चर्च झर्झ परिभाषणभर्त्सनयोः' इति तु सिद्धान्तकौमुद्याम्. ३. इदं पञ्चपञ्चाशश्लोके. ४. इदं सप्तपञ्चाशश्लोके.

सङ्कोचे कुचतीति स्यात् कोचेत् संवर्चनादिषु ॥ ५४ ॥*

'कुच संकोचे' । तुदादिः । 'कुच संवर्चनकौटिल्यप्रतिष्टम्भाविलेखनेषु' । ज्वलादिः । तत्फलं पुनः 'इगुपधज्ञाप्रीकिरः कः' (६-१-१३५) इति प्राप्ते 'ज्वलितिकसन्तेभ्यो णः' (३-१-१४०) इति पक्षे णः कोचः कुच इति । यस्तु 'कुच शब्दे तारे' इति ज्वलादिभ्योऽन्यत्र पठ्यते, तस्य कोचेत् कुच इति द्रष्टव्यम् । तत्र ज्वलादिषु पाठादेवानयोरपि रूपयोः सिद्धत्वेऽपि कुच एवात्रार्थे यथा स्यात्, न तु कोचोऽपीत्येवमर्थं पृथक् पठ्यते ; न पुनः कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनतारशब्देष्वित्येकीकृत्यवै ॥

वियोजनेऽर्चयेदर्चैर्यो स्तुतावृचतीत्यृचेः ।

ऋचेर्युजादौ मृग्यः पाठः । 'रिच वियोजने' इति प्रागुक्त एव हि पाठो दृश्यते । 'ऋच स्तुतौ' । तुदादिः ॥

शशापोरुञ्छतीत्युञ्छे स्वरभेदाद् द्विरुच्यते ॥ ५५ ॥
उच्छतीति विवासे स्यादिदितोऽनिदितस्तयोः ।

'उछि उञ्छे' । 'उञ्छो धान्यश आदानं कणिशाद्यार्जनं शिलम्' इति यादवप्रकाशः । श्लोकेऽपि विवास इतिवद् उञ्छे इति सप्तम्येव, न पुनरुञ्छेरिति षष्ठी । विसर्जनीयकल्पनागौरवं चैवं परिहृतम् । यद्येवमुञ्छतीत्येव शशपो रूपं, ततः स्वतः प्राप्ते भूवादावेवायं पठ्यताम् । अथापि 'शतुर्वा नुं शे स्यादिति तुदादिते'ति वक्ष्यमाणनीत्योञ्छन्ती उञ्छतीति नुम्विकल्पार्थं तुदादौ पठ्येत । तथापि न भूवादौ । तदेवं रूपाभेदात् कुतोऽयं द्विष्पठ्यते इत्यत उक्तं स्वरभेदादिति । उञ्छतीत्यापाततो रूपाभेदेऽपि सूक्ष्मेक्षिकायां मध्योदात्ताद्युदात्तत्वाभ्यां रूपभेदोऽप्यस्त्येवेत्यर्थः ।

---

१. द्वापञ्चाशपद्योक्तः.

अत्र हि 'अनुदात्तौ सुप्पितौ' (६-१-४) इत्यनुदात्तस्तिपूशपोरजि-ति 'धातोः' (६-१-१६२) इत्युदात्त उकारः 'उदात्तादनुदात्तस्य स्वरित' (८-४-६६) इति स्वरितः शप् । 'स्वरितात् संहितायामनुदात्तानाम्' (१-२-३९) इत्येकश्रुतिरिकारः । स एव च प्रचय इत्युच्यते । एवं शप्याद्युदात्तं पदम् । शे पुनः 'आद्युदात्तश्च' (३-१-३) इत्युदात्ते सति मध्योदात्तम् । तथा च 'अनुदात्तं पदमेकवर्जम्' (६-१-१५८) इत्यनुदात्त उकारः । स च 'उदात्तस्वरितपरस्य सन्नतर' (१-२-४०) इत्यनुदात्ततरः । तिपश्चानुदात्तस्वरितौ पूर्ववत् । 'उछी विवास' इतीदित्त्वेनेदित्त्वाभावान्नुमभावेन तयोः शशपोरुच्छतीति स्यात्[1] । विपूर्वश्चायं प्रायः प्रयुज्यते । 'ततो रजन्यां व्युष्टायाम्' '[2]व्युच्छन्ती दुहिता दिवः' । 'उषा [3]उच्छदपस्निधः' इति ॥

**णौ विच्छयति भाषार्थे गतौ विच्छायतीति शे ॥ ५६ ॥**

**विच्छेराये शतुर्वा नुं शे स्यादिति तुदादिता ।**

विच्छ भाषार्थः । 'विछ गतौ' । 'छे च' (६-१-७३) इति तुक्सिद्धोर्विच्छेत्यपपाठः । तत्र चान्त्याद् 'गुपूधूपविच्छिपणिपनिभ्य आय' (३-१-२८) इत्याये शे च सति विच्छायतीति भवति । अथास्य तुदादिपाठः किमर्थः । न तावत् स्वरार्थः । 'एकादेश उदात्तेनोदात्त' (८-२-५) इत्यनुदात्तस्य शशपोर्विशेषाभावात् । इह हि शे उदात्ते पूर्ववद्धात्वकारो[4]ऽनुदात्तः । शपि त्वनुदात्तेऽसावुदात्त इत्येवं सत्यपि विशेषे तयोरेकदेश उदात्त एवेत्यत

१. ईदित्त्वेनेति च्छेदः. २. व्युच्छन्ती (तमांसि) वर्जयन्तीत्यर्थः । इदं तैत्तिरीयब्राह्मणे तृतीयाष्टके प्रथमप्रश्ने तृतीयेऽनुवाकेऽस्ति. ३. विपूर्वत्वव्यभिचरोदाहरणमिदम् । अपोच्छद्= अपवर्जयतीत्यर्थः । एतच्च ऋक्संहितायां प्रथमाष्टके चतुर्थाध्याये चतुर्थवर्गेऽस्ति. ४. धात्वकारशबकारयोः.

आह—शतुर्वा नुं शे स्यादिति तुदादिता । शे हि सति विच्छायती विच्छायन्तीत्यत्र 'आच्छीनद्योर्नुम्' (७-१-८०) इति नुं विकल्प्यते । शपि तु 'शप् श्यनोर्नित्यम् (७-१-८१) इति नित्यं स्यात् ।

अत्र केचित् तुदादिपाठबलाद्विच्छतीत्यपि रूपमिच्छन्ति । 'तुदादिभ्यः शः' (३-१-७७) इति विच्छेः शो विधीयते, न तु विच्छायेः, विच्छेरेव तुदादिषु पाठात् । तच्चैतद् विच्छेः शविधानम् आये नित्ये सत्यायान्ताद् भवत् परिक्लिश्येत । एवं चा'यादय आर्धधातुके वा' (३-१-३१) इत्यत्र 'शपि नित्यम्' इति भाष्ये शब्ग्रहणं विच्छेः शेऽप्यायस्य विकल्पे स्वारस्येनावकल्पेत । न पुनः शिद्विकरणोपलक्षणतया कथञ्चिन्नीयेत । तथा च सुधाकरः—'विच्छेस्तुदादिषु पाठो ज्ञापकः सार्वधातुकेऽप्यायप्रत्ययोऽनित्य इति । तेन विच्छतीति सिद्धम्' इति । 'च्छ्वोः शूडनुनासिके च (६-४-१९) इत्यत्र न्यासकारश्च—'गां विच्छतीति गोविड्' इति । †यन्नुंविकल्पः फलमित्युक्तं, तुदादिपाठात् तदपि

१. आयादेशाभावपक्षे शे सति रूपमिदम् । अपिशब्दसङ्ग्राह्यं तु विच्छायतीति आयान्तादौत्सर्गिके शपि द्रष्टव्यम्. २. एवञ्च = शेऽप्यायस्य नित्यत्वे च. ३. दोषपरिहारार्थं 'आयादयः शपि नित्यम्' इति कश्चिन्न्यासभेदोऽयम् । अनेन च शपोऽन्यत्र सर्वत्रायप्रत्ययस्य विकल्पः स्वरसतः प्रतीयते. ४. कैयटेन तु नीयते, यत् स आह—"ननु तौदादिकत्वाद्विच्छेः शेन भाव्यं, न तु शपा । एवं तर्हि न्यासभेदोपलक्षणार्थमिदमिति 'शिति नित्यम्' इति तु न्यासः कर्तव्यः" इति । एवं च शेऽप्यायस्य नित्यत्वं फलति । विच्छेः शविधानस्यायप्रत्ययान्तार्थत्वं च गुपादिष्वनुबन्धकरणस्य सन्नन्तसमुदायार्थत्ववदुपपत्स्यत इति पूर्वोक्तः परिक्लेशोऽपि न.

†'यच्च नुम्' इति गपुस्तके पाठः.

सम्भवतीति तुदादिपाठस्येदमेव फलं न्याय्यम् । एवं च नुंविकल्पाद्विच्छन्ती विच्छतीत्येव युक्तम् । विच्छायतीत्यौत्सार्गिकः शबेवेति नित्यो नुम् ॥

**रजते रजतीत्येव रज्यते रज्यतीत्यपि ॥ ५७ ॥**

**रागार्थे शप्श्यनोर्द्वे द्वे**

'रञ्ज रागे' । 'दंशसञ्जस्वञ्जां शपि' । 'रञ्जेश्च' (६-४-२६) इति, 'अनिदिताम्' (६-४-२४) इति नलोपः ॥

**गतौ वजति वाजयेत् ।**

'वज, व्रज गतौ' । 'वज मार्गसंस्कारगत्योः' । मार्गण इति धनपालः । 'वज, मार्गेति द्वौ धातू इत्यन्ये' इति क्षीरस्वामी । व्रजेति चन्द्रः । 'व्रज मार्गसंस्कार' इति दुर्गः । उभयोरप्यनयोर्वजव्रजपक्षयोर्मार्ग(ण?)संस्कार इत्येवार्थस्तन्त्रान्तरे पठ्यते ॥

**दीप्तौ शप्येजते तत्र भवेदेजाति कम्पने ॥५८॥**

'एजृ भ्रेजृ भ्राजृ दीप्तौ' । 'एजृ कम्पने' ॥

**वृणक्ति वर्जने वृङ्क्ते यौ वर्जयति वर्जति ।**

'वृजी वर्जने' । रुधादिर्युजादिश्च । तत्र चाद्ये वरण इति धनपालशाकटायनौ । 'वृजि वर्जने' । अदादिरनुदात्तेत् । ईदित्पाठे तु नुमभावाद्वृक्त इति पाठः । तथा च क्षीरस्वामी । वृजि इति पठित्वा 'वृजी इति दौर्गाः । वृक्ते वर्जिता वृक्तः' इत्याह । तत्र चान्त्ये 'श्वीदितो निष्ठायाम्' (७-२-१४) इतीडभावः । शाकटायनस्य त्वयं सम्पर्चने । यदाह—'विजुङ् वृजुङ् वृजैङ्

१. अनेन नलोपो दैवादिके.

सम्मर्चने' इति । तेन च 'ईदित्स्थाने ऐदित् क्रियते ॥

**गर्जेद् गृञ्जेद् गजेद् गञ्जेच्छब्दने गाजयेण्णिचि ॥५९॥**

'गज गाजि गृज गृजि मुज मुजि शब्दार्थाः' । मज मुजीति क्षीरस्वामी चन्द्रश्च । 'मृज मृजीत्यप्याहुरि'ति च[†] । 'गज मदने च' । शब्देऽस्य पाठो मदने प्रयोगाप्राचुर्यार्थो नूनम् । यदाह 'अघि मघि लघि गत्याक्षेपे । मघि कैतवे च' इत्यत्र मैत्रेयरक्षितः—'पूर्वमस्य पाठः कैतवार्थस्यान्वाचितत्वद्योतनाय' इति । व्यभिचरति चैतद् 'वृषु पृषु मृषु सेचने । मृषु सहने च' इत्यादौ । गेज शब्दार्थः । अत्र च गर्जतीत्येतद 'गर्ज शब्द' इत्यस्यापि कामं द्रष्टव्यम् ॥

**धर्जेद् धृञ्जेद् ध्रजेद् ध्रञ्जेद् ध्वजेद् ध्वञ्जेद् गतौ शपि ।**

'ध्रज ध्रजि धृज धृजि ध्वज ध्वजि गतौ' ॥

**शौचालङ्कारयोर्वा णौ मृजेर्मार्जति मार्जयेत् ॥ ६० ॥**

**मार्ष्टि शुद्धौ तथा [§]मार्जेः शब्दार्थाद् मार्जयेण्णिचि ।**

'मृजू शौचालङ्कारयोः' । मृजूषिति क्षीरस्वामी; षकारोऽङ्कर्थ इति च । तच्चिन्त्यम्, मृजेति भिदादिपाठात् सिद्धेः । 'मृजेर्वृद्धिः' (७-२-११४) इति वृद्धिः । 'मृजू शुद्धौ' । अदादिः ।

---

१. 'न डीयश्व्यैदित्वेटोऽपतः' (४-२-१४३) इति शाकटायनः । 'डीयश्विभ्यामैदितो विकल्पितेटश्च क्तयोरिट् न भवति, न पतः' इति च तदर्थः. २. चार्थान्वाचययोगेन मदनरूपार्थस्यानुषाङ्गिकत्वसम्पादनात् तस्मिन् धातोः प्रयोगाप्राचुर्यं फलतीत्यभिप्रायः. ३. अन्वाचितत्वं=अन्वाचययुक्तत्वं । तद्द्योतनाय. ४. 'मृषु सहने च' इत्यत्र हि चशब्दः समुच्चयार्थ एवाश्रयणीयो, नत्वन्वाचयार्थः सहने प्रयोगप्राचुर्योपलम्भात्. ५. 'गज मार्ज शब्दार्थौ' इति चुरादौ पठितः.

---

†'चाह' इति गपुस्तके पाठः. §'मार्ज शब्दार्थे' इति खपुस्तके पाठः

मार्ज शब्दार्थः । तथा 'गज गजी'त्यत्र क्षीरस्वामी मृज मृजि इत्यप्याह मार्जति मृञ्जतीति ॥

वेवेक्तीति पृथग्भावे विविक्ते च भये पुनः ॥ ६१ ॥

विनक्ति विजते

'विजिर् पृथग्भावे' । जुहोत्यादिः[1] । 'णिजां त्रयाणां गुणः श्लौ' (७-४-७५) इत्यभ्यासस्य गुणः । 'ओविजी भयचलनयोः' । रुधादिस्तुदादिश्च ॥

सर्गे सृज्यते सृजतीति च ।

'सृज विसर्गे' । दिवादिस्तुदादिश्च । लोके त्वनुपसृष्टः सृजिः सृष्टौ प्रसिद्धः कर्षतिरिवाकर्षण इत्यतो विसर्ग इति नोक्तं 'कर्षत्याकर्षण' इत्यत्रैव विलेखन इति ॥

ऋञ्जते भर्जने गत्याद्यर्थे स्यादर्जते त्वृजेः ॥ ६२ ॥

'ऋजि भृ(जि?)जी भर्जने' । 'ऋज गतिस्थानार्जनोपार्जनेषु' इति मैत्रेयरक्षितः । ऊर्जनेष्विति क्षीरस्वामिशाकटायनधनपालाः । अनुदात्तेत् ॥

प्रतियत्नेऽर्जयेदर्जेरर्जतीत्यर्जने पदम् ।

'अर्ज प्रतियत्ने' । अत्र 'उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु' (६-१-१३९) इत्यत्र वामनः—'सतो गुणान्तराधानमाधिक्याय वृद्धस्य वा तादवस्थ्याय समीहा प्रतियत्नः' इति । अत्र चान्तरो-

१. एतच्च ५९ श्लोके गर्जेदित्यंशव्याख्यायामुक्तम्. २. अयं स्वरितेत्. ३. 'कर्षत्याकर्षणे शे तु कृषते कृषतीत्युभे' इति १७८तमे श्लोके. ४. काशिकाकारः. ५. वृद्धियुक्तावस्थायाः प्रच्युतिपरिहारायेत्यर्थः. ६. अन्तरशब्दस्यान्यवाचिन उपादानेन.

त्या प्रागेव गुणे सति पुनराधानं किमर्थमित्यत उक्तम् 'आधिक्याये'ति। अधिकस्येत्युक्तौ च गुणान्तराधानेनैवाधिक्यं भायादित्यन्य[2]कृतमप्याधिक्यं संगृहीतं 'वृद्धस्ये'ति। अर्थान्तरे त्वयमर्जिः प्रसिद्धः—'द्रव्यमर्जयन् ब्राह्मणः प्रतिगृह्णीयाद्' इति। अर्ज षर्ज अर्जने॥

निङ्क्ते नेनेक्ति नेनिक्ते शौचेऽर्थे पोषणे तथा॥ ६३॥

'णिजिर् शौचपोषणयोः'। रु[3]धादिर्जुहोत्यादिश्च॥

युनक्ति युङ्क्ते योगार्थे समाधौ युज्यते श्यनि।
युजेः संयमनार्थे वा णौ योजयति योजति॥ ६४॥

'युजिर् योगे'। 'युज समाधौ'। अनुदात्तेत्। 'युज पृच संयमने'॥

भुजेद् भुनक्ति भुङ्क्ते स्युः कौटिल्ये पालनेऽदने।
[क्रमेण

'भुजो कौटिल्ये'। 'भुज पालनाभ्यवहारयोः'। तुदादी रुधादिश्च। 'भुजोऽनवन' (१-३-६६) इति तङ्॥

प्रतियत्नेऽर्जेरर्जयेदर्जनेऽर्जति।]

ये तु प्रागेव 'प्रतियत्नेऽर्जयेद्' इत्याद्यपाठिषुः, तेऽत्र 'क्रमेण' इत्यादि न पठन्त्यर्थाभेदात्॥

सेवायां भजते भजेदिति भजेर्विश्राणने भाजयेद्
आमर्दे तु भनक्ति भाजयति णौ भाजेः पृथक्कर्मणि।

---

१. विद्यमानत्वेन ज्ञाते सतीत्यर्थः. २. अन्येन गुणान्तराधानातिरिक्तेन स्वभावादिना कृतम्. ३. अयमनुदात्तेत्। अन्यस्तु स्वरितेत्.

भाषार्थे णिचि भञ्जयेद्

'भज सेवायाम्' । 'भज विश्राणने' । 'भञ्जो आमर्दने' । नोपधोऽयम् । चुत्वेन ञकारः । तेन 'श्नान्नलोप' (६-४-२३) इति नंलोपः 'पूर्वत्रासिद्धम्' (८-२-१) इति चुत्वस्य तत्रासिद्धत्वात् । 'भाज पृथक्कर्माणि' । तच्च पृथक्करणम् । भजि भाषार्थः ।

अभिहिते त्वर्थे पदं तुञ्जये-

द्धिंसायां शपि तुञ्जतीत्यनिदितस्तस्यां तुजेस्तोजति ॥

तुजि भाषार्थः । अभिहितोऽर्थो भाषायामित्युक्तोऽर्थः । वक्ष्यमाणापेक्षया विशेषद्योतकस्तुः ; पादपूरणो वा । 'तुज तुजि हिंसायाम्' । 'तुजि पालने च' ॥

सन्तर्जने तर्जयते भर्त्सनार्थे तु तर्जति ॥ ६६ ॥

'तर्ज, भर्त्स सन्तर्जने' । †चितादिः । 'तर्ज भर्त्सने' । अर्थैक्येऽपि धातुपाठवशात् पृथक्कथनम् ॥

वर्णे पिङ्क्ते भवेत् पिञ्जेर्भाषार्थे पिञ्जयेदिति ।

'पिजि वर्णे' । अदादिरनुदात्तेत् । 'पृजिरित्येके' इति मैत्रेयरक्षितः । 'पिजुङ् संपर्चन' इति शाकटायनः । पिजि भाषार्थः । 'तुजि पिजि हिंसाबलादाननिकेतनेषु' इत्यर्थान्तरेऽपि चौरादिकौ तुजिपिजी स्तः ।

गुञ्जेदव्यक्तशब्दे स्याच्छब्दमाले गुजेदिति ॥ ६७ ॥

'गुजि अव्यक्तशब्दे' । गुज इत्यपरे । तथा च क्षीर-

---

१. अयं पटपुटादिदण्डके पठितः । एवं तुजिपिज्यादयो द्रष्टव्याः.

---

† 'चितादी' इति ग्रपुस्तके पाठः.

स्वामी – 'अनिदित्येके' इति। सुधाकरश्च भूवादि (१-३-१) सूत्रे 'अनिदित्पारायणेष्वपाठि, गोजति जुगोजेत्याद्युदाहृतेः। *पक्षे पुनरिदिदेव गीतः' इति। शाकटायनः पुनर्गुज गुजीति पठन् पक्षद्वयमपि परिजग्राह। 'गुज शब्दे'। तुदादिः॥

भृञ्जते भृज्जति भ्रस्जेर्भर्जने भर्जते भृजेः।
'भ्रस्जु पाके'। 'ऋजि भृजी भर्जने'॥
प्रकाशे लजयेद् व्रीळे लज्जते लर्जते पदे॥ ९८॥
लञ्जेल्लाजेल्लजेल्लाजेदित्येते भर्त्सने शपि।

'लज प्रकाशने'। कथादिः। 'लजि इत्येके' इति मैत्रेयरक्षितः। तदा लञ्जयेदिति पठितव्यम्। लञ्जापयेदिति शाकटायनः। 'कथादिपातिस्फायोऽग्लग्वम्' (४-१-१९७) इत्यगागमश्च। कथादीनां पातेः स्फायतेश्च अक्, लक्, वम् इत्येत आगमा णौ क्रमाद् भवन्तीत्यर्थः। ततो वृद्धिपुकौ। 'ओलजी, ओलस्जी $व्रीळने'। तुदादी। तत्र च शो भवन् 'तास्यनुदात्तेद्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्तमह्निङोः' (६-१-१८६) इति तिङ्यनुदात्ते उञ्छतिवदुदात्तः। 'लज लाजि भर्त्सने'। 'लाज लजि भर्त्सने च'। अत्र मैत्रेयरक्षितः – 'चकारो भिन्नक्रमः। एतावपि भर्त्सने पठ्येते इत्यर्थः'। इति। 'लज लजि भर्त्सने। लाज लाजि भर्जने च' इति तु क्षीरस्वामी। 'लज लजु भर्त्सने'। लाज लाजु भर्जने चे'ति पठन् शाकटायनोऽप्यत्रैवानुकूलः। एवञ्च भ(र्जे?)र्त्सनग्रहणं भर्जनस्यापि काममुपलक्षणं द्रष्टव्यम्। लञ्जयेदिति च क्षीरस्वामिनः पक्षे, तेन लजेरपि पठ-

*'लक्ष्ये' इति गपुस्तके पाठः. $ 'व्रीले' इति गपुस्तके पाठः.

पुटादिदण्डके 'तुजि पिजी'त्यत्र च लजि लुजीत्यपि पाठात् ॥

भङ्गे रुजति हिंसायां रोजयेदिति णौ रुजेः ॥ ६९ ॥

'रुजो भङ्गे' । तुदादिः । 'रुज हिंसायाम्' । [1]ग्रसादित्वात् सकर्मकादेव णिच् ॥

घाटयेद् घण्टयेत् सङ्घभाषयोर्घटते मितः ।
क्रमाद्विकासे शशपोः स्फुटति स्फोटते पदे ॥ ७० ॥
स्फोटयेत् स्फोटतीति द्वे भेदे विशरणे क्रमात् ।

अत्र घाटयतिस्फोटयत्योर्विवदन्ते । तत्र धनपालस्तावत्—"'चटास्फुट भेदने' उच्चाटयति आस्फोटयति । 'घट च सङ्घाते' । चकारात् पूर्वौ चात्रार्थे णिचमुत्पादयत" इति । शाकटायनस्तु—'चटास्फुटौ घट च हन्त्यर्थाः' इति । क्षीरस्वामी तु "'चट स्फुट भेदने' चाटयति स्फोटयति । 'घट च' घटधातुश्च भेदने वर्तते । 'हन्त्यर्थाः' । हन्त्यर्थाश्च धातवो णिचमुत्पादयन्ति" इत्युक्त्वा दर्शनान्तरमप्याह—"'घट च हन्त्यर्थाः' । चटस्फुटधातू द्वौ घट च धातुस्त्रय एते हन्त्यर्था हन्तिना समानार्था णिचमुत्पादयन्ति" इति । मैत्रेयरक्षितस्तु—"'चट स्फुट भेदने' । घट सङ्घाते' 'हन्त्यर्थाश्च' । येऽन्येषु नवसु गणेषु हिंसार्थाः पठ्यन्ते, त इह द्रष्टव्याः" इति । तत्र नवस्विति शबादित्रिकरणविषयेषु भूवादिप्रभृतिषु । इहेति चुरादौ । एतेषु च पक्षेष्वन्त्यस्य[2]ानुकूलं दैवम् । घट घटि भाषार्थौ । [3]ततश्चार्थौ यथासङ्ख्यं न भवतः । 'घट चेष्टायाम्' । तस्य तु मित्त्वाद्धेतुमण्णिचि घटयेत् । स्फुट विक-

1. आस्वादीयत्वात्. 2. आनुकूल्यं च 'भेदे स्फोटयेद्' इति, 'सङ्घे घाटयेद्' इति च कथनात् स्पष्टम्. 3. घाटयतेरपि भाषार्थकत्वादित्यर्थः.

सने'। 'स्फुटिर्विशरणे'। स्फुटेति चन्द्रः। इरित्फलं तु 'इरितो वा' (३-१-५७) इत्यङ्विकल्पः। अस्फुटत्। अस्फोटीत्॥

प्रमर्दने चाक्षेपे च मुटेदाद्ये तु मोटति॥ ७१॥
सञ्चूर्णने चुरादेर्णौ मोटयेदतङस्त्रयः।

'मुट आक्षेपप्रमर्दनयोः'* । तुदादिः। 'मुट प्रमर्दने' 'पुडि' इति धनपालः। शाकटायनश्च 'पुंडु' इति पठन्नत्रैवानुकूलः। क्षीरस्वामी त्वेतौ पाठौ मुटि मुडि इत्यपरौ चावोचत्। मैत्रेयरक्षितस्तु 'मुडि खण्डन' इत्यत्राह—'पुडि चेत्येक' इति। 'मुट सञ्चूर्णने'॥

हिंसातिक्रमयोरट्टेरट्टतेऽनादरेऽट्टयेत्॥ ७२॥

'अट्ट अतिक्रमहिंसनयोः'। अत्र मैत्रेयरक्षितः—"दोपधोऽयमिति स्मर्यते। 'ष्टुना ष्टुः' (८-४-४१) इत्यत्र न्यासकारेण तु तकारोपधोऽयमित्युक्तम्" इति। क्षीरस्वामी तु 'पक्षद्वयेऽपि पाठेऽत्र ष्टुत्वं न कृतमसन्देहार्थम्' इत्यप्याह। 'अन्ये अड्डेत्याहुः' इति च। तत्र चाद्ये पक्षे संश्चङोः कृतयोः 'नन्द्राः संयोगादय' (६-१-३) इति दकारवर्जे द्विरुक्तौ ष्टुत्वे 'पूर्ववत्सन' (१-३-६२) इति तङि च कृते अट्टिटिषते आट्टिटदिति भवति। अन्ये त्व-

१. 'आद्ये' इत्यस्य विवरणमिदम्. २. 'डान्तपाठः प्रकरणविरोधादुपेक्ष्यः' इति माधवः. ३. उपधाभूतस्य तकारस्य ष्टुत्वे तस्य 'पूर्वत्रासिद्धीयमद्विर्वचन' इति सिद्धत्वाद् टकारद्वयसहितस्य द्वित्वे 'हलादिः शेषः' (७-४-६०) इति निमित्तटकारनिवृत्त्या नैमित्तिकस्य ष्टुत्वस्य निवृत्तौ तकार एवाभ्यासेऽवतिष्ठत इति भावः। 'निमित्तापाये नैमित्तिकस्याप्यपायः' इत्येतदनाश्रयेण तु अटिट्टिषते आटिट्टद् इत्येव रूपं माधवो मन्यते.

* 'आक्षेपमर्दनयोः' इति गपुस्तके पाठः.

तिट्टिष्ते आतिट्टदिति । 'अट्ट अनादरे' ॥

घट्टयेद् घट्टते द्वे स्तां चलने णौ शपि क्रमात् ।

'घट्ट चलने' । अन्त्योऽनुदात्तेत् ॥

णौ लोटयति भाषार्थे लुट्येल्लोटति लोटने ॥ ७३ ॥
लोटते प्रतिघातेऽर्थे स्तेये लुण्टाति लुण्टयेत् ।
रोटते प्रतिघातेऽर्थे रोषे रोटयतीति णौ ॥ ७४ ॥

लुट भाषार्थः । 'लुट विलोटने' । दिवादिर्भूवादिश्च । अत्र भूवादिसूत्रे सुधाकरः—"'लुड विलोडन' इति डान्तः । लान्तोऽपि तु ददृशे । लोलः । 'लोलर्जुजाकारबृहत्तरङ्गः' इति माघे । 'डलयोरेकत्वस्मरणामिति केचिद्' इति वा प्रतिविधेयम्" इति । 'रुट लुट प्रतीघाते' । अनुदात्तेतौ । ठान्ताविमावित्येके । तथा च क्षीरस्वाम्येवमेव पठित्वाह—"रुट लुट इत्येके । 'बाधृ लोटन' इति लिङ्गाद्" इति । तथा 'रुट दीप्तावि'त्यप्यनुदात्तेत्सु स एवाह । लुटि इति तु शाकटायनः । रुट लुट इति हरियोगी । 'रुटि लुटि स्तेये' । क्षीरस्वामी तु—'रुठि लुठि इत्येके । रुण्ठति लुण्ठति' इति । रुड्ड लुड्ड इति डान्तकाण्डे शाकटायनः । 'लुण्ट स्तेये' । लुण्ठेति क्षीरस्वामी । लुण्डेति शाकटायनः । तत्र चाद्य एव पाठो 'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' (३-२-१५५) इति सूत्रपाठानुसारी । यस्तु लुटीत्यनेन लुण्टाक इति निर्वाहः क्षीरस्वामिनः, सोऽपि 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमि'ति नीत्या विरुध्यते । लुटीत्यस्य हि लुण्टभावो लाक्षणिकः । स च लुण्टे-

१. अयं चुरादिः. २. लुण्ट लुण्ठ लुण्डेषु. ३. इदिता.

त्येव प्रतिपदोक्ते धातौ सम्भवति कथङ्कारं गृह्येत, लुण्टेत्यस्यैव झटिति परिस्फुरणात् । 'कुट्टि लु(ण्टि?)ण्डिवृङ्जल्पभिक्षादाकट्' (४-३-२५५) इति शाकटायनानुसारेण कुट्ट लुण्डेत्येव पाठपरिकल्पनेऽपि टकारसाहचर्यादनाञ्जस्यं व्यक्तमेव । 'रुष रोषे । रुट इत्यप्येके' इति मैत्रेयरक्षितः । 'रुट भाषार्थे' इति च क्षीरस्वामी ॥

कूटयेताप्रसादे णौ कूटेर्दाहे तु कूटयेत् ।

'कूट अप्रसादे' । चितादिः । 'कूट प्रतापन इत्येके' इति मैत्रेयरक्षितः । स एव तु पाठः प्रायेण दृश्यते । तदा 'कोटयेत प्रतापे णौ' इति पठितव्यम् । 'कुट्ट प्रतापने' । कुट्टयेतेति क्षीरस्वामी । 'कुट्ट छेदनपूरणयोरि'ति च चुरादा[1]वेवाह । कुत्सनयोरिति तु बहवः । छेदन इत्येव पुनः 'जल्प भिक्ष' (३-२-१५५) इत्यत्र जिनेन्द्रः । एवमेव च दुर्गः । सर्वथापि तस्य कुट्टयतीति द्रष्टव्यम् । कुटपक्षे तु 'कुट कौटिल्य' इत्यस्य तुदादेः कुटतीति । 'कूट दाहे' । कथादिः । तत्फलं पुनरचुकूटदित्यत्र 'नाग्लोपिशास्वृदिताम्' (७-४-२) इति ह्रस्वाभावः । परितापन इति तु मैत्रेयरक्षितः । 'केत श्राम कुण गुण चामन्त्रण' इति चकारादामन्त्रणेऽप्ययं वर्तते । केत ग्रामेति मैत्रेयरक्षितपाठेऽप्यत्रां[2]शे न विवादः । बहुनुमतत्वात् परमाद्यमेव पाठमभिरोचयामहे ॥

भाषा[3]संसर्गसंश्लेषे पोटयेत् पुटयेत् पुटेत् ॥ ७५ ॥

पुट भाषार्थः । 'पुट संसर्गे' । कथादिः । पुट संश्लेषे । तुदादिः ॥

---

१. चितादेर्बहिरित्यर्थः. २. चकारेण कूटानुकर्षणांशे. ३. समाहारद्वन्द्वोऽयम्.

नृतौ नटत्यवस्पन्दे चुरादेर्णिचि नाटयेत् ।

'नट नृतौ' । नृतौ *नृत्ताविति च क्षीरस्वामी । उभयथापि नर्तन इत्येवार्थः । तच्च नाट्यम्, यत्कारिषु नटव्यपदेशः । न तु मार्गदेशीशब्दाभ्यां प्रसिद्धं नृत्यं नृत्तञ्च,यत्कारिषु नर्तकव्यपदेशः। तत्र च वाक्यार्थाभिनयो नाट्यम् । पदार्थाभिनयस्तु नृत्यम् । अभिनयशून्यः पुनः शास्त्रोक्तभङ्ग्या गात्रविक्षेपो नृत्तमिति तद्विदः । नैघण्टुकानां तु 'ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तनम्' इत्यभेदव्यवहारो निरूढलक्षणयैव नेयः, 'अन्यायश्चानेकार्थत्वम्' इति न्यायात् । 'नट अवस्पन्दने' । तच्च नाट्यम् । नाट्य इत्येव चन्द्रः । अत्र च णोपदेशाणोपदेशविभागो 'णो नः' (६-१-६५) इत्यत्र भाष्ये दर्शितः—'सर्वे नादयो णोपदेशा नृतिनन्दिनर्दिनक्किनाटिनाथृनाधृनॄवर्जम्' इति । केचित् पुनस्थान्तमेवात्र पठन्ति, न धान्तम । तथा च 'णाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु' इत्यत्र मैत्रेयरक्षितः—'आद्यो णोपदेशः, नेतर' इति । (नृत?) नॄ इति प्रायो न पठन्ति । तथा च श्रीधरो नॄत्यागेन नृत्यादीन् पठित्वा 'एतान् सप्त वर्जयित्वा' इत्याह । नटिश्चुरादिण्यन्तो[†] नाटिः । 'नृती गात्रविक्षेपे' । 'टुनदि समृद्धौ' । 'नर्द गर्द शब्दे' । शाकटायनन्यासे तु णोपदेशो वायम् । 'नक्क ठक्क नाशने' । 'नॄ नये' । तत्र च प्रणटति प्रनाटयति इत्यादौ 'उपसर्गादसमासेऽपि णोपदेशस्य' (८-४-१४) इति णत्वं तदभावश्च णोपदेशाणोपदेशफलम् । घटादौ चायं नटिः पठ्यते ।

१. घटादिरत्वदीर्घार्ह इति न गृह्यते.

*'नृत्ताविल्यपि' इति गपुस्तके पाठः. †'दिण्र्यन्तो' इति गपुस्तके पाठः.

अर्थपाठे त्वस्य विवदन्ते। तत्र तावन्नृताविति नृत्ताविति गताविति च पक्षत्रयं मैत्रेयरक्षितः प्रतिपेदे। क्षीरस्वामी तु—'नट नतौ नटयति शाखाम्। नृत्तौ तु नाटयति' इति॥

भाषार्थे पाटयेद् ग्रन्थे पटयेद् गमने पटेत्॥ ७६॥
वण्टयेद्वण्टतीत्येते णिशपोः स्तां विभाजने।
णावदन्ताद्वटेर्ग्रन्थे वटयेद्वेष्टने वटेत्॥ ७७॥

पट भाषार्थः। 'पट वट ग्रन्थे'। *कथादिः। स च वेष्टनमिति क्षीरस्वामी। 'अट पट गतौ'। 'वटि विभाजने'। चुरादिः कथादिर्भूवादिश्च। तत्र च कथादौ वटेत्येके। तथा च मैत्रेयरक्षितो वटेति पठित्वा 'वटीत्येके' इत्याह। तदा वटयेदित्यपि द्रष्टव्यम्। वण्टापयेदिति तु शाकटायनः। तच्च लञ्जापयेदितिवज्ज्ञेयम्। मैत्रेयरक्षितश्चाह—'अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यपरे। वण्टापयति लञ्जापयति' इति। चुरादौ तु स एवाह—'वटि विभजन इति भूवादौ पठ्यते। ततो हेतुव्यापारे णिचि विभाजनेऽर्थे वण्टयतीति सिध्यति। किन्त्वसौ कर्त्रभिप्राये क्रियाफले आत्मनेपदी। अनेन पुनस्तत्रापि वण्टयतीति। अन्ये पुनर्वैचित्र्यार्थमस्योपादानमिच्छन्ति' इति। तदा 'णिशपोः स्तां विभाजने' इत्येताद्विभाजने विभजने चेति व्याख्येयम्। भाजेर-

१. नमयतीत्यर्थः. २. हेतुण्यन्तः. ३. चौरादिकेन. ४. इदं च प्रयोजनं चुरादिण्यन्तेभ्यो 'णिचश्च' (१-३-७४) इत्यात्मनेपदाभावपक्षे। पक्षान्तरे तु चुरादौ पाठो वैचित्र्यार्थ इत्याह—अन्ये पुनरिति. ५. भौवादिकस्य विभजनार्थत्वे.

*'कथादौ' इति घपुस्तके पाठः.

रपि पृथक्कर्मकर्मणो विभजनार्थत्वसम्भवात् । बहुसम्मतत्वाद्वो-भयत्रापि विभाजन इत्येव युक्तं पाठं मन्यते । क्षीरस्वाम्यादयः पुनर्बहवश्वशुरादिं डान्तं पठन्ति । डान्तकाण्डं चैवमनुसृतं भवति । शाकटायनः पुनर्भूवादिमपि डान्तकाण्ड एवाध्यगीष्ट । 'वटं वेष्टने' । 'वट भट परिभाषणे' इति च घटादौ पठ्यते । बटेत्यप्याद्यो बहुषु कोशेषु दृश्यते ॥

श्लेषालस्योपघातेषु प्रतिघाते क्रमाल्लुठेत् ।
लुण्ठेल्लोठति लोठेत किन्तु गत्यां च लुण्ठति ॥ ७८ ॥
रुण्ठतीति गतौ रोठेदुपघाते-

'लुठ श्लेषणे' । तुदादिः । 'लुड इत्येके' इति मैत्रेयरक्षितः । डान्तकाण्डं चैवमनुसृतं भवति । लुठतीति लक्ष्यदर्शनात् तुदादौ पाठ इति भूवादौ क्षीरस्वामी । 'लुठि आलस्ये गतिप्रतिघाते च' । 'रुठ लुठ उपघाते' । 'उठ इत्यप्येके' इति मैत्रेयरक्षितः । उठ इत्येव धनपालः । क्षीरस्वामी त्वेवमेव पठित्वा 'रुठ लुठेत्यपि दौर्गाः' इत्याह । ऊठ इत्येव शाकटायनः । 'लुठ प्रतीघाते' । अत्र भूवादिसूत्रे सुधाकरः—'लुट प्रतिघाते इति लुटवद् द्वितीयान्तोऽपि प्रलुठितो लोठमान इति प्रयोगदर्शनादूरीकृतः' इति । कैयटस्तु 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (३-१-७) इत्यत्र लुलुठिषत इति भाष्यं व्याचक्षाण आह—'रुठ लुठ प्रतिघाते इति द्युतादौ पठ्यते' इति । 'रुठि लुठि गतौ' ॥

---

१. पृथक्कर्म पृथक्करणं विभजनं, तत्क्रियेत्यर्थः. २ विभाजनशब्दार्थद्वयकल्पनाक्लेशमरोचयमानो देवाभिप्रायमन्यथा विवृणोति.—बहुसम्मतत्वाद्वेति.

ऽथ कण्ठते ।

शोके यौ कण्ठयेत् कण्ठेत् कठेत् स्यात् कृच्छ्रजीवने ॥

अथशब्दः पूर्वार्थान्वयाशङ्कापरावृत्तिपरः । 'कठि शोके'[1] । 'कठ कृच्छ्रजीवने' । एष्वाद्योऽनुदात्तेत् ॥

गतिप्रतिहतौ शोठंत्यालस्ये शोठयेदिति ।

'शुठ गतिप्रतीघाते' । शूठ इति क्षीरस्वामी । प्रतीघात इति धनपालः । तथा च 'कुठि च' इत्युत्तरधातौ कुण्ठ इत्यादौ प्रतिहतिमात्रं प्रतीयते । 'अनिशित इत्यर्थे'[2] इति च स एवाह । 'शुठ आलस्ये' ।

शुण्ठयेच्छुण्ठतीत्येवं शोषणे णौ शपि क्रमात् ॥ ८० ॥

'शुठि शोषणे' । अत्र णौ क्षीरस्वामी — 'केचिदेनमेकारन्तं पठन्ति । लक्ष्यतस्तदपि प्रमाणम्' इति । तदा शोठयेदिति पठितव्यम् ।

शठयेच्छ्ठयेदेते द्वे सम्यगवभाषणे ।
गत्यसंस्कारधात्वर्थे शाठयेच्छ्वाठयेदिति ॥ ८१ ॥
कैतवे शठतीति स्याच्छ्लाघायां शाठयेत णौ ।

'शठ श्वठ सम्यगवभाषण' इति मैत्रेयरक्षितः । कथादी । सम्यगाभाषण इति दुर्गः । सम्यगाभाषणे सम्यग्वचनक्रियायामिति क्षीरस्वामी । सम्यग् भाषण इति शाकटायनः । 'शठ श्वठ असंस्कारगत्योः' । 'श्वठि इत्येके' इति मैत्रेयरक्षितः । 'शठ कैतवे च' । चकारात् पिठ हिंसासंक्लेशनयोरित्युक्तावर्थौ गृह्येते ।

---

१. 'इह शोक आध्यानम्' इति माधवः. २. अनिदितमित्यर्थः.

क्षीरस्वाम्यादयः पुनश्चकारं नैव पठन्ति । 'शठ श्लाघायाम्' । चितादिः ॥

मण्ठते शापि शोकार्थे मठेन्मदनिवासयोः ॥ ८२ ॥

'मठि शोके' । 'मठ मदनिवासयोः' ॥

वण्ठते त्वेकचर्यायां स्थौल्ये शापि वठेदिति ।

'वठि एकचर्यायाम्' । अनुदात्तेत् । 'वठ स्थौल्ये' ।

मुण्डते मार्जने मुण्डेः खण्डने शापि मुण्डाति ॥ ८३ ॥

'मुडि मार्जने' । 'शोधन इत्यर्थः' इति च धनपालः । मज्जन इत्यन्ये । तथा च क्षीरस्वामी—'मज्जनं शुद्धिर्न्यग्भावश्च' इति । 'मुडि खण्डने' । क्षीरस्वामीत्वाह—"अर्थभेदात् पुनः पाठः । अत एव 'मुडि खण्डनप्रमर्दनयोः' इति कण्ठः । शुठीति कौशिकदुर्गौ । शुण्ठति" इति । 'मुट प्रमर्दन' इत्यत्रापि (ठा?) डान्तेन मुडीति पाठात् पुनः पाठः ॥

भूषार्थे मण्डतीति स्यान् तत्र मण्डयतीति णौ ।

---

१. मूलेऽर्थनिर्देशस्योपलक्षणतामाश्रित्यान्योऽपि परस्मैभाषः प्रमर्दनार्थो मुटप्रसक्तावुक्तः क्षीरस्वाम्यनुसरणे सङ्ग्राह्यः स्यादित्येवं रूपं विशेषमाविष्कर्तुमाह—क्षीरस्वामीत्वाहेति. २. कण्ठः=सरस्वतीकण्ठाभरणं, तत्कर्त्ता भोजदेव इति यावत् । एतदन्तवाक्यानुवादेनोपपत्तौ 'शुठीति' इत्यादिकमधिकमनुवदन्नेवं मन्यते—सति शुठिपाठे खण्डनप्रमर्दनाभ्यां सह शोषणग्रहणस्याप्यत्रैव सुकरतया 'शुठि शोषण' इति पृथङ् न पाठ्यं स्यादिति युक्त्या यथायं शुठिपाठो न गणितोऽस्माभिः (८० श्लोके.), तथा मुडिपाठे सति प्रमर्दनेन सह खण्डनग्रहणस्यापि कर्तुं शक्यतया 'मुडि खण्डन' इति पृथङ् नापठिष्यतेति युक्त्या प्रमर्दनार्थे मुडिपाठोऽयं नादर्त्तव्य इति. ३. क्षीरस्वाम्युक्तोऽयं पुनःपाठः कस्य पठितस्येत्येतद् विवृणोति—मुटेति.

**मण्डते वेष्टने**

'माडि भूषायाम्'। णौ तु हर्षे चेत्यधिकम्। 'वडि वेष्टने माडि च'। क्षीरस्वामी त्वाह—"'वडि विभाजने[१]। माडि च'। पृथक्सूत्रादर्थान्तरेऽपि। नन्दी तु 'वडि विभाजने। माडि वेष्टन' इति च भङ्क्त्वा पठति" इति। तच्चार्थान्तरं प्रयोगतोऽवगन्तव्यम्॥

**स्तुत्यामीट्टे तत्रेडयेण्णिचि ॥ ८४ ॥**

'ईड स्तुतौ'। आद्योऽदादिरनुदात्तेत्॥

**मन्थार्थे खण्डते खण्डेर्भेदार्थे खण्डयेण्णिचि।**

'खडि मन्थे'। स च मन्थनम्। 'खड खडि कडि भेदे'। तत्र च खडेत्यस्य खाडयतीति द्रष्टव्यम्॥

**हेडतेऽनादरे हेडेर्वेष्टने हिडयेन्मिथः ॥ ८५ ॥**

**होडतीति गतौ होडेर्होडतेऽनादरे पुनः।**

'हेडृ होडृ अनादरे'। अनुदात्तेतौ। 'हेड वेष्टने'। घटादिः। तत्र च मितां ह्रस्वो भवन् 'एच इग्घ्रस्वादेशे' (१-१-४८) इतीगेव भवति। हेतुमण्णिच्त्वात्तु 'णिचश्च' (१-३-७४) त्यात्मनेपदमप्यूह्यम्। अण्यन्तावस्थायां तु हेडतीति द्रष्टव्यम्। 'हुडृ होडृ गतौ'। हुडृ हूडृ इति धनपालशाकटायनौ। क्षीरस्वामीत्वाह—"'हूडृ हुडृ हौडृ गतौ' हूडति होडति हौडति। होडृ इति चन्द्रः। होडति" इति॥

---

१. अस्य धात्वन्तरत्वे वा पूर्वपठितात्मनेपदिधात्वनुवादरूपत्वे वा परस्मैपदिपङ्क्तौ निवेशादित्याशयः। अत्र माधवः—'इहायमनृदित् पठ्यते, पूर्वस्त्वृदिदिति धात्वन्तरत्वं नाशङ्क्यं, यत ऋदितोऽननुवादेऽपि मित्त्वाद्ध्रस्वत्वेन भाव्यमित्युत्सृष्टानुबन्धोऽयमनुवादोऽनादरार्थस्य हेडतेः' इति.

कण्डयेदिति भेदे णौ मदे तु शपि कण्डते ॥ ८६ ॥

'कडि भेदे' । स चात्रावघातः । 'कडि मदे' । अनुदात्तेत् । कडेर्भूवादितुदाद्योः पाठात् केडतीत्यपि भवति । क्षीरस्वामी तु भूवादौ परस्मैभाषमपि कडीत्येव पठित्वाह—'कडति दुर्गः' इति ॥

लाडयत्युपसेवायां विलासे तु लडेच्छपि ।

'लड उपसेवायाम्' । 'लड विलासे' । 'लड ईप्सायां वे'ति च क्षीरस्वामी । ळळयोर्लडयोश्च कैश्चिदविशेषाश्रयणाल्लाळयति ललनेत्यपि भवति । घटादौ पुनः पठ्यते—'जिह्वोन्मथने लडिः' इति । जिह्वाया उन्मथने लडिर्मिद्भवतीत्यर्थः । लडयति जिह्वाम् । कौमारास्त्वाहुः—'अन्ये जिह्वोन्मथने इति द्वन्द्वं व्याचक्षते । तदा लडयति शत्रुमित्यपि भवति' इति । क्षीरस्वामी तु—"जिह्वोन्माथनयोर्लडिः' । लड विलास इत्ययं भूवादिर्जिह्वाविषयायां क्रियायामुन्माथे च मित् । लडयति जिह्वाम् । लडयति दधि । अन्यत्र लाडयति मित्रम् । जिह्वोन्मथन इति गुप्तः । 'जिह्वाशतान्यल्लडयत्यभीक्ष्णम्'" इति । धनपालस्तु—'जिह्वोन्मथने लडिः । आर्याणान्तु जिह्वोन्मथनयोरिति पाठः' इति ॥

मृडेर्मृण्णाति सुखने तत्रैव मृडतीति शे ॥ ८७ ॥

'मृड सुखने' । क्र्यादिः तुदादिश्च । अन्ये त्वाद्यं 'मृद क्षोदे, मृड सुखने च' इति पठन्ति । तथाच 'गुध रुषि मृद

१. 'कड मदे' इत्येवंरूपात्. २. अस्योभयत्र पाठफलं तु 'स्वरभेदाद् द्विरुच्यत' इति (९९श्लो.) पूर्वोक्तनीत्यावगन्तव्यम्. ३. उन्मथनं=क्षोभणम्. ४. समाहारद्वन्द्वम्.

संक्षोदे' 'मृड सुखनार्थे च कुन्थ संक्लेशे' इति श्लोकधातुपाठः । क्वचित्तु 'मृड च' इति क्षोदार्थतैव दृश्यते ॥

वैकल्यदाहरक्षासु कुण्डेत् कुण्डेत कुण्डयेत् ।

'कुडि वैकल्ये' । शाकटायनः पुनष्टकारान्तमध्येऽसुमध्यैष्ट । क्षीरस्वामी त्वाह—'कुठीति कौशिकदुर्गौ । कुण्ठति कुण्ठः' इति । 'कुडि दाहे' । अनुदात्तेत् । 'कुडिं रक्षणे' ॥

तोडनार्थे तुडेस्तुण्डेस्तुडेत् तोडति तुण्डते ॥ ८८ ॥

तुड्योस्तुण्डेश्च तुडेदित्यादि भवतीत्यर्थः । 'तुड तोडने' । तुदादिः । 'तुड़ृ तोडने' । तूड़ृ इति शाकटायनः । 'तुडि तोडने' अनुदात्तेत् । तच्च दारणं हिंसा च । यदाहान्त्ययोः क्षीरस्वास्मी ॥

§कल्याणे [2]भण्डयेद्भण्डेः परिहासे तु [3]भण्डते ।
प्रेरणे जोडयेच्छे तु बन्धने जुडतीति च ॥ ८९॥

'जुड बन्धे' । तत्र चैवं यथापाठितेऽर्थे जोडयेदिति जुडतीति च भवतीति वाक्यार्थसमुच्चये चकारो व्याख्येयः; न पुनर्बन्धन एव जोडयेदिति च भवतीति ॥

सङ्घाते पिण्डयेत् पिण्डेस्तत्रैव शपि पिण्डते ।

'पिडि सङ्घाते' । अन्त्योऽनुदात्तेत् ॥

---

१. 'च यदा' इत्यस्य स्थाने 'चेत्या' इति पठनीयं भाति. २. 'भडि कल्याणे'. ३. 'भडि परिभाषणे'. अनुदात्तेत्. तच्च 'परिहासः सनिन्दोपालम्भश्च । 'यः सनिन्द उपालम्भस्तत्र स्यात् परिभाषणम्' इत्यमरः । "'परिहास' इति देवः । 'परितो भाषणं परिभाषणम्' इति स्वामी" इति माधवः.

---

§ इदमर्धं गपुस्तके न पठ्यते.

**कणेः कणाति शब्दार्थे काणयेण्णौ निमीलने ॥ ९० ॥**

कण शब्दार्थः । 'कण निमीलने' । घटादौ च 'कण रण गतौ' इति पठ्यते । तस्य तु हेतुमण्णिचि कणयेत् । शब्दार्थस्य तु काणयेदित्येव ॥

**भूवाद्योर्घुणिघूर्ण्योः स्तां घोणते घूर्णते शपि ।**
**भ्रमणेऽत्र तुदाद्योः शे स्यातां घुणति घूर्णति ॥ ९१ ॥**

'घुण घूर्ण भ्रमणे' । अत्रेति भ्रमण एवेत्यर्थः ॥

**अणेरणाति शब्दार्थे प्राणने त्वण्यते श्यनि ।**

अण[2] शब्दार्थः । 'अण प्राणने' । अनुदात्तेत् । अनेति शाकटायनः । तवर्गान्तकाण्डं चैवमनुसृतं भवति ॥

**मितः श्रणाति दानार्थे श्राणयत्यत्र णौ पदम् ॥ ९२ ॥**

'चण शण श्रण दाने' । घटादयः । 'गतावित्येक' इति मैत्रेयरक्षितः । मित्फलं पुनः श्रणयतीति हेतुमण्णिचि ह्रस्वः । श्रण दाने' । विपूर्वश्चायं दृश्यते । 'विश्राणनं वितरणम्' इति ॥

**व्रणेच्छब्दार्थविषये व्रणयेद् गात्रचूर्णने ।**

'व्रण[3] शब्दार्थः' । 'व्रण गात्रचूर्णने' । कथादिः ॥

**आमन्त्रणे तु कुणयेच्छब्दे चोपकृतौ कुणेत् ॥ ९३ ॥**

'कुण आमन्त्रणे' । कथादिः । 'कुण शब्दोपकरणयोः' । तुदादिः ॥

**बन्धनेऽन्तति सातत्यगमनेऽताति**

---

१. गत्यर्थस्यैव घटादावनुवादादिति भावः. २. 'अण रण वण' इत्यादिदण्डके पठितः. ३. अणरणादिदण्डकपठितः.

'अति अदि बन्धन' इति मैत्रेयरक्षितः । 'तान्तं द्रामिडाः पठन्ति । आर्यास्तु दान्तम् इति धनपालः' । क्षीरस्वामी तु अति अदीत्येव पठित्वा तथैव चोदाहृत्याह–"अतेः पाठोऽनार्षः । अन्ये 'अदि' इति बन्धन' इति पेठुः । तनुयाश्चकार[1]" इति । 'अत सांतत्यगमने' ॥

चिन्तयेत् ।

**स्मृत्यां चेताति संज्ञाने तव चेतयते णिचि ॥ ९४ ॥**

'चिति स्मृत्याम्' । 'चिती संज्ञाने' । 'चित सञ्चेतने' । इति मैत्रेयरक्षितः । संवेदन इति बहवः ॥

**कृणत्ति कृन्ततीत्येते वेष्टने छेदने क्रमात् ।**
**कीर्त्तयेदिति संशब्दे**

'कृती वेष्टने' । रुधादिः । 'कृती छेदने । मुचादिः' । 'कॄत संशब्दने' । 'उपधायाश्च' (७-१-१०१) इतीत्वं रपरत्वं च । 'उपधायां च' (८-२-७८) इति दीर्घः ॥

**गत्यर्थे पतयेत् पतेत् ॥ ९५ ॥**

'पत गतौ वा' । कथादिः । केचित् तु वेति न पठन्ति ।[2] तथैव च 'स्पृहिगृहिपातिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्' (३-२-१५८) इत्यत्र वृत्तौ[3] दृश्यते । वापाठे तु सति यावदुपयुक्तं वृत्तिकृता पठितमिति[4] कल्पनीयम् । तत्र च वापाठपक्षे तस्य णिज्विकल्पार्थत्वात् पतेत्यस्य पतयेत् पतेदिति भवति;' पत्लृ गतौ,

---

१. 'इन्ताञ्चकार' इति पाठः स्यात्. २. 'पत गतौ' इत्येवेत्यर्थः, ३. काशिकायाम्. ४. वाशब्दस्तु प्रकृतानुपयोगान्न पठित इति तात्पर्यम्.

इत्यस्य तु पतेदित्येवेति। विकल्पफलं पुनर्लुङादावपतीत्। पताञ्चकार। अपप्तत्। पपातेत्यादिषु द्रष्टव्यम्। तत्र च पतामित्यत्र 'कास्यनेकाजूग्रहणं चुलुम्पाद्यर्थम्' इति वार्तिकेनाम्। अपप्तदित्यत्र ऌदित्त्वादङ्। 'पतः पुम्' (७-४-१९) इति पुम्॥

**यतते तु प्रयत्नार्थे निराकारे तु यातयेत्।**

'यती प्रयत्ने'। 'यत निकारोपसंस्कारयोः'। निराकार इति तु पाठो दृश्यते। 'निराकारः परिभव' इति च क्षीरस्वामी। उपस्कारोपसंस्कारयोः पुनः *पाठकृतो विप्रवदन्ते। तथा चाख्यातनिघण्डुः—'यत्ने प्रैषे निराकारे यातयेदप्युपस्कृतौ' इति। श्लोकधातुपाठश्च—'यत उपसंस्कारनिकारार्थः स निरश्च धान्यधनवाची' इति॥

**वर्तयेद् भाषणार्थे णौ वर्तने शपि वर्तते॥ ९६॥**

वृतु भाषार्थः। 'वृतु वर्तने'। अनुदात्तेत॥

**ग्रथ्नातीति तु सन्दर्भे ग्रन्थयेद् ग्रन्थतीति यौ।**
**कौटिल्ये ग्रन्थते ग्रन्थेर्ग्राथयेद् ग्रथति ग्रथेः॥ ९७॥**

'ग्रन्थ सन्दर्भे'। क्र्यादिः। 'अनिदिताम्' (६-४-२४)इति नलोपः। 'श्रन्थ ग्रन्थ सन्दर्भे'। 'ग्रथि कौटिल्ये'। अनुदात्तेत्। 'ग्रथ बन्धने'। युजादिः॥

---

१. अणिच्कक्रथादेर्भ्वादेश्च रूपे को विशेष इत्याकाङ्क्षायामाह—**विकल्पफलमिति.** २. परस्परप्रतिषेधेन विरुद्धं वदन्तीत्यर्थः. ३. धान्यधनविषयक्रियावाचीत्यर्थः। ऋणं निर्यातयतीति यथा. ४. एतदनुवादे 'णौ वर्तयति भाषार्थे' इति पाठो दृश्यते १३१ श्लोकविवरणे.

---

*'पाठका' इति गपुस्तके पाठः.

**हिंसासंक्लेशयोर्मन्थेन्मथेन्मथ्नाति लोडने।**

मंथि हिंसासंक्लेशयोः। क्षीरस्वामी तु मन्थेति पठित्वा मेथ्यत इति चोदाहृत्य 'माथि इति दौर्गाः। मन्थ्यत' इत्याह। 'मथे विलोटने'। 'मन्थ विलोटने'। क्र्यादिः। भूवादौ चामुं मैत्रेयरक्षितः पठति। चन्द्रदुर्गौ च। §तदा मन्थेदित्येतद्विलोटनेऽप्यावृत्त्या कामं व्याख्यायताम्॥

**कुथ्नाति कुन्थेत् संक्लेशे पूतीभावे तु कुथ्यति॥ ९८॥**

'कुन्थ संक्लेशे'। क्र्यादिः। संश्लेषणे इत्येके। तथा च 'संश्लेषणे संश्लेषणाक्रियायाम्' इति क्षीरस्वामी। कुथि हिंसासंक्लेशयोः। कुथ पूतिभावे। दिवादिः॥

**प्रथते प्राथयत्येतत् प्रख्याने द्वितयं प्रथेः।**
**पृथेः पर्थयतीत्येतत् प्रक्षेपे णौ पदं विदुः॥ ९९॥**

'प्रथ प्रख्याने'। आद्यो घटादिरनुदात्तेत्। तत्र च हेतुमण्णिचि मित्त्वाद्ध्रस्वे प्रथयति। अन्त्ये तु 'नान्ये मितः' इत्यमित्त्वान्न ह्रस्वः। 'प्रथ प्रक्षेपे'। केचित् पुनर्घटादौ च पृथिं पठन्ति। तथा च क्षीरस्वामी—"पृथु विस्तारे। पर्थति। 'प्रथेः षिवन् सम्प्रसारणं चे'ति प्रथेः सम्प्रसारणविधानादनार्षममुं मन्यन्ते" इति। 'यदप्रथयत् तत् पृथिव्यै पृथिवित्वम्'। इत्यस्य श्रौतस्य

१. 'कुथि पुथि लुथि मथि मान्थि हिंसासंक्लेशयोः' इत्यत्र पठितः। मान्थिस्तु न दृश्यते सिद्धान्तकौमुद्याम्. २. अनिदितामिति नलोपादिति भावः. ३. श्रुतिसिद्धस्येत्यर्थः। उदाहृतं च वाक्यं तैत्तिरीयब्राह्मणे प्रथमाष्टके प्रथमप्रश्ने तृतीयानुवाकेऽस्ति.

§'तथा' इति गपुस्तके पाठः.

निर्वचनस्यानार्षपक्ष एवाञ्जस्यम् । अन्यथा हि यदपर्थयदित्येव निर्ब्रूयात् । सर्वथापि प्रथेर्घटादिपाठे तत्फलं 'घटादयः षित' इति षित्त्वादङि [1]सति प्रथेति रूपं द्रष्टव्यम् । येऽमी घटादय आत्मनेपदिनः पठितास्ते षिद्वद् भवन्तीत्यर्थः ॥

**क्रथत्यंयौ यौ हिंसायां क्राथयेत् [2]क्रथते क्रथेत् ।**

'श्रथ श्लथ क्रथ क्लथ हिंसार्थाः' । घटादयः । 'क्रथ हिंसायाम्' । स्वरितेत् । शाकटायनस्य तु परस्मैपदी । अपरे पुनरेनं न पठन्ति । तथा च 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्' (२-३-५६) इत्यत्र चोरस्योत्क्राथयतीत्यत्र निपातनाद्वृद्धिरिति [3]वृत्तिः । सति हि चौरादिके 'नान्ये मित' इति मित्त्वनिषेधादयत्नसिद्धा वृद्धिर्न निपातनसाध्या ॥

**पुथ्येत् पुन्थति हिंसार्थे भाषार्थे पोथयेदिति ॥ १०० ॥**

'पुथ हिंसायाम्' । दिवादिः । पुथि हिंसासंक्लेशयोः । पुथ भाषार्थः ॥

**दौर्बल्ये श्रथयेत्प्रयत्नविषये स्याच्छ्राथयेन्मोक्षणे**
**यौ तु श्राथयति श्रथत्यपि च वा णौ श्रन्थयेच्छ्रन्थति ।**
**सन्दर्भे श्नि विमोचनार्थविषये श्रथ्नात्यथ श्रन्थते**
**शौथिल्ये-**

१. अयुजादौ. २. स्वरितेत्त्वादेव णिजभावपक्षे पदद्वयमुदाहृतं 'क्रथते क्रथेद्' इति. ३. नाटसाहचर्याद्व्याख्यानाच्च निपातनं णिज्विषयम्, घटादिपाठस्तु मित्त्वेन 'चिण्णमुलोः' (६-४-७३) इति दीर्घार्थः, पाठे ह्रस्वोच्चारणं च दीर्घणिचोरभावे श्रवणार्थमिति वृत्त्याशयः.

'शीर कृप श्रथ दौर्बल्ये '। कथादयः । 'श्रथ प्रयत्ने' । इति मैत्रेयरक्षितः । प्रतिहर्ष इति बहवः । 'श्रथ मोक्षणे' । 'श्रथ हिंसायाम्' इत्यपरे । तथा च 'श्रथ क्रथ हिसु हिंसायाम्' इति शाकटायनः । 'श्रन्थ ग्रन्थ सन्दर्भे' । 'श्रन्थ विमोचनप्रतिहर्षयोः'[1] । ये तु 'श्रन्थ ग्रन्थ सन्दर्भे' इत्यपि क्र्यादौ पेठन्ति, तथा च 'सन्दर्भे श्रन्थनक्रियायां श्रन्थग्रन्थधातू वर्तेते' इति क्षीरस्वामी; तेषां सन्दर्भ इत्येतद्यथाश्रुतं श्रश्नातीत्यनेनैव सम्बन्धनीयम् । वा णौ इत्यनेनैव पूर्वधातोरवच्छेदः[†] सिद्धः । 'श्रथि शैथिल्ये' ॥

ऽथ पथेर्गतौ पथति णौ पन्थेर्गतौ पन्थयेत् ॥ १०१ ॥

'पथे गतौ' । एवं च 'पथेर्गतौ' इत्यत्रापि काममस्यैवैकारस्य पूर्वरूपम्[3] । तत्फलं[4] पुनरपथीदित्यत्र 'ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्' (७-२-५) इति वृद्ध्यभावसंसूचनं । 'पथि गतौ' ॥

क्लिन्दते क्लिन्दतीत्येवमिदितः परिदेवने ।
क्लिद्यतीत्यार्द्रभावेऽर्थे क्लिदेः श्यन्यूदितो भवेत् ॥ १०२ ॥

'क्लिदि परिदेवने' । अकर्त्रभिप्राये कर्त्रभिप्राये च क्रियाफले द्वैरूप्यार्थो द्विष्पाठः । एवञ्च 'इदितोः परिदेवन' इति पठितुं युक्तम्[5] । 'क्लिदू आर्द्रीभावे' । ऊदित्त्वफलं तु क्लेत्त्वा क्लेदिता

---

१. दन्त्यादित्वेनापि पाठो दृश्यते. २. पाठेऽस्मिन्नरुचिस्तु रूपभेदाभावेन विमोचनप्रतिहर्षाभ्यां सहैव सन्दर्भग्रहणे कार्ये पृथक् पाठो न कर्तव्य इति । अत एव 'ग्रन्थ सन्दर्भे' इत्येव तत्प्रसक्तावुक्तम्. ३. 'ङसिङसोश्च' (६-१-११०) इति. ४ एकारान्तानुकरणफलम्. ५. एक एव धातुः पदद्वयवानुदाहृत इति भ्रमानुत्पादायेति शेषः.

---

†'दासिद्धे' इति गपुस्तके पाठः.

इत्यादौ 'स्वरतिसूतिसूयती'ति (७-२-४४) इड्विकल्पः; न पुनः पाठशुद्ध्या पदशुद्धिरेव। वक्ष्यति च 'ईटा भिदेति'[1] ॥

**आस्वादनेऽर्थे स्वदते स्वादयेदिति शब्णिचोः।**

'ष्वद ष्वर्द आस्वादने'। अनुदात्तेतौ। 'ष्वद आस्वादने'। विस्तृतश्चायं 'भाषार्थे यौ तु लोकयेद्'[2] इत्यत्र। यस्तु स्वाद आस्वादन इत्येव भूवादावपि पठ्यते, तस्य तङि स्वादत इति द्रष्टव्यम् ॥

**अर्दयेदर्दतेऽर्देयौ हिंसनेऽर्दाति याचने ॥ १०३ ॥**

'अर्द हिसि हिंसायाम्'। आद्यः स्वरितेत्। शाकटायनस्य त्वात्मनेपदी। 'अर्द गतौ याचने च' ॥

**मेदते मेद्यतीत्येते स्नेहने मिन्दयेण्णिचि।**
**ऋदितो मेदते मेदेन्मेधाहिंसनयोर्द्वयोः ॥ १०४ ॥**

'ञिमिदा स्नेहने'। भूवादिर्दिवादिश्च। 'मिदेर्गुणः' (७-३-८२) इति गुणः। 'मिदि स्नेहने'। क्षीरस्वामी तु 'मिद स्नेहने। मेदयती'त्युक्त्वा 'कैश्चिदिदित् पठ्यते' इत्याह। 'मिदृ मेदृ मेधाहिंसनयोः'। थान्तावेताविल्येके। व्यक्तं चैतत् क्षीरस्वामिवृत्तौ। धान्तावपरे। तथा च 'षिद्भिदादिभ्योऽङ्' (३-३-१०४) इत्यत्र मेधाशब्दव्युत्पादने जिनेन्द्रः पपाठ। भोजदेवस्तु 'रिखिलिखिशुभिासिधिमिाधिगुधिभ्यो गुणश्च' इत्यङ्विधौ मिधेर्गुणं च विदधद् मेधिं नानुमन्यते। कौमाराश्चात्रैवानुकूलाः। तत्र च रिखिः सौत्रो लिख्यर्थः। सेधा सत्त्वम्। गोधा प्रकोष्ठत्राणम्। शिष्टं स्पष्टम्। सर्वथापि 'प्रत्येकं निदिनेद्योः स्तां नेदते नेदतीत्युभे' इत्येवात्रा-

---

१. ११९ तमश्लोके. २. ४० श्लोके.

त्राप्युभयाविवक्षायामृदितोरिति युक्तं पठितुम् । 'इदितः परिदेवने' इत्यत्रैव वा जात्याख्यायामेकवचनम् । ऋदित्त्वफलं तु 'णौ चङ्युपधाया ह्रस्वः' (७-४-१) इति ह्रस्वेनामीमिददिति प्राप्ते 'नाग्लोपिशास्वृदिताम्' (७-४-२) इति निषेधाददामिमेदादिति रूपम्'॥

आह्वाने रोदने क्रन्देः कन्देः क्रन्दति कन्दति ।
वैक्लब्ये तु तयोर्धात्वोः क्रन्दते कन्दते मितोः ॥ १०५ ॥

'कदि क्रदि क्लदि आह्वाने रोदने च'[2] । 'केदि क्रदि क्रद क्लद वैक्लब्ये' । क्षीरस्वामी तु 'कदि क्रदि क्लदि वैक्लब्ये' इत्युक्त्वा 'वैकल्य इति चन्द्रः । कद क्रद क्लदेति नन्दी' इत्याह । सर्वथापि क्लन्द्यादेरपि क्लन्दतीत्यादि[3] यथार्हमूह्यम् ।'

अथ मितोरिति किमर्थं, नहि तावद्ध्रस्वार्थं, 'नुंविधावुपदेशिवद्वचनम्' इति वार्तिकाद्[4] 'इदितो नुं धातोः' (७-१-५८) इति धातुग्रहणबलादेव वा धातुसंज्ञासमनन्तरमेव नुमि कृतेऽका-

१. एवञ्चार्थनिर्देशे न यथासङ्ख्यं श्लोके. २. एते घटादयः. ३. आदिना क्लदते क्रदते. ४. उन्द्यादेर्नकार इव नुम् इदितो धातोरुपदेशावस्थायां सन्निहितो वक्तव्य इति वार्तिकार्थः । तेनाङ्गोऽपि नुम् भाविन्यङ्गत्वे पूर्वमेव भवतीति 'कुण्डा हुण्डा' इत्यादौ 'गुरोश्च हलः' (३-३-१०३) इत्यप्रत्ययो गुरुमत्त्वसम्पत्त्या सिध्यति. ५. तासिसिचोरिदित्त्वाभावेऽपि 'मन्ता अमंस्त' इत्यादौ 'अनिदिताम्' (६-४-२४) इति प्राप्नुवन्नुपधानकारलोपो डादेशनिमित्तस्य टिलोपस्याभीयासिद्धत्त्वात्, 'हनः सिच्' (१-२-१४) इति सिचः कित्त्वविधानेन 'आहसाताम्' इति नलोपार्थेन सिजाश्रयोपधानलोपाभावज्ञापनाच्च वारयितुं शक्य इत्यत इकारवैयर्थ्ये स्थिते उच्चारणमात्राय च 'च्लेः सच्' 'स्यतासौ' इत्येवमकारस्य पाठे प्राथम्यान्याय्ये तावतैव 'अच्छैत्सीत्' इत्यादौ नुमागमाप्रसङ्गादधातोरिदितो व्यावर्त्यस्यालाभाद् धातुग्रहणमचरितार्थं सद् धातूपदेशावस्थोपलक्षणार्थं विज्ञायते; तथा च भाष्यं— 'धातुग्रहणसामर्थ्याद्वा तदुपदेशे नुंविधानम्' इति । तेन वार्तिकफलस्य सूत्रत एव सिद्धेराह — धातुग्रहणबलादेव वेति.

रस्यानुपधात्वेन 'अत उपधाया' (७-२-११६) इति वृद्धेरभावा-द्धस्वविधेर्वैयर्थ्यात् । न च 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (६-४-९३) इति दीर्घार्थः, 'ऊदुपधाया गोहः' (६-४-८९) इत्यत उप-धाया इत्यत्रानुवृत्तेरुपधाया एव मितां ह्रस्वदीर्घयोर्विधानाद्, अत्र चानुपधात्वात् । न च घटादिपाठबलादनुपधात्वेऽपि दीर्घः सि-ध्यति । षित्त्वार्थतयापि पाठोपपत्तेरित्यत आह—

मित्त्वार्थपाठसामर्थ्यात् तयोर्दीर्घविकल्पनम् ।
भवेच्चिण्णमुलोस्तस्मादक्रान्यक्रन्दि सिध्यतः ॥

षित्त्वं खल्वाङि कन्दा क्रन्देति रूपार्थम् । तयोश्च 'गुरोश्च हलः' (३-३-१०३) इत्यप्रत्ययेनैव सिद्धेर्मित्त्वार्थ एवायं पाठ इति तद्बलादनुपधात्वेऽपि अक्रान्दि अक्रान्दि क्रान्दं क्रन्दम् । अका-न्दि अकन्दि कान्दं कन्दमिति वैकल्पिको दीर्घः सिध्यतीत्यर्थः । एवं क्रुन्देरप्यूह्यम् ॥

गात्रप्रक्षरणे स्विद्येत् स्वेदते स्नेहमोकयोः* ।

'ष्विदा गात्रप्रक्षरणे' । दिवादिः । तथा च 'निष्ठाशीङ्-स्विदिमिदिक्ष्विदिधृषः' (१-२-१९) इत्यत्र हरदत्तः— ञिष्विदा स्नेहनमोचनयोरित्यस्य भौवादिकस्य ञीतो ग्रहणं । न तु ष्विदा गात्रप्रक्षरण इत्यस्य दैवादिकस्य, ञीद्भिः साहचर्यात् । अस्य चा-ञीत्त्वाद्' इति । 'ञिष्विदा स्नेहनमोचनयोः' । अनुदात्तेत् । क्षीरस्वामी तु 'ञिक्ष्विदा' इति क्षकारादिं पठित्वाह— 'ञिष्विदेति नन्दी' इति ॥

क्ष्वेदत्यव्यक्तशब्दार्थे क्ष्विद्यति स्नेहमोक्षयोः ॥ १०७ ॥

*'मोक्षयोः' इति गपुस्तके पाठः.

'ञिक्ष्विदा अव्यक्ते शब्दे' । 'ञिक्ष्विदा स्नेहनमोचनयोः' । दिवादिः । मोहनयोरित्यपि बहुषु ग्रन्थेषु दृश्यते ॥

**ज्वलादेश्च तुदादेश्च सीदेद् विशरणादिके ।**
**पद्यतेरर्थ आसीदेदासादयति चाङि णौ ॥ १०८ ॥**

'षद्लृ विशरणगत्यवसादनेषु' । तुदादावप्येवमेव धनपालः । विशरण इत्येव मैत्रेयरक्षितो दुर्गश्च । 'विशमृशणुदप्रवेशामर्शक्षेपेषु षद्लृ विशरणार्थः' इति च श्लोकधातुपाठः । अवसादन इत्येव क्षीरस्वामिशाकटायनौ । अत्र च ज्वलादित्वात् सीदतीत्यर्थे साद इति पक्षे णः । अन्यदा§ सद इति पचाद्यजेव । तुदादित्वफलं तु स्वरभेदनुंविकल्पौ पूर्वोक्तावेव च द्रष्टव्यौ । 'आङः षद पद्यर्थे' । आङः परः षदधातुः पदेरर्थे गतावन्यत्रापि यथाप्रयोगं विकल्पेन णिचमुत्पादयतीत्यर्थः । आङीति चाङ्युपपदे । तत्र[1] चासीदेदित्यन्याय्यं[2] मन्यामहे । शदिसह[3]चरितयोर्ज्वलादितुदाद्योरेव सद्योः सीदादेशस्य न्याय्यत्वात् । तथा च तद्विधौ तावेव न्यासकृता पठितौ—'षद्लृ विशरणगत्यवसादनेष्विति भौवादिकः । षद्लृ विशरणे तौदादिकः' । इति ॥

**व्यक्तवाचि वदेद्वा णौ वादयेद् वदते वदेत् ।**
**सन्देशे**

'वद व्यक्तायां वाचि' । 'वद सन्देशे' । स्वरितेत् । शाकटायनस्य तु आत्मनेपदी । यदाह—'वदि सन्देशवचने' इति ।

---

१. तत्र=तयोर्युजाद्युदाहरणयोः. २. आसदेदिति तु न्याय्यमित्यभिप्रायः. ३. साहचर्यं च धातुपाठे.

---

§ 'अन्यथा' इति गपुस्तके पाठः.

धनपालस्तु 'पद[†] सन्देशवचने पादयति पदति । अन्यत्र प(च?)दयते' इति । वदि अभिवादनस्तुत्योरित्यस्य च वन्दत इति द्रष्टव्यम् ॥

इयानि गत्यर्थे पद्यते पदयेत णौ ॥ १०९ ॥

'पद्लृ गतौ' । दिवादिः कथादिश्च । आगर्वादित्वात् तङ् ॥

णौ देवशब्दे गदयेद् व्यक्तवाचि गदेच्छापि ।

'स्तन गदी देवशब्दे' । स च पर्जन्यध्वनिः । स्तनश्च गदिश्च स्तनगदी इत्यदन्तोपदेश एव गदिः । 'इक्श्तिपौ धातुनिर्देशे वक्तव्यौ' इतीक्प्रत्ययं कृत्वा अतो लोप इत्यल्लोपेनात्र निर्दिश्यत इत्याहुः । 'स्तन गद' इत्येव चन्द्रः । केचित्तु गादिमीदितमेवेच्छन्तः कथादिकाण्डपाठबलादेवादन्तत्वं कल्पयन्ति । तथा च 'स्तन गदै इति' शाकटायनः । तन्मते तु '[२]कथादिपाति' इत्यक् । 'गद व्यक्तायां वाचि' ॥

नदत्यव्यक्तशब्दार्थे भाषार्थे नादयेदिति ॥ ११० ॥

'णद अव्यक्ते शब्दे' । णद भाषार्थः । 'टुनदि' इत्यस्य नन्दतीति द्रष्टव्यम् ॥

सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे ।
विन्दते विन्दतीत्येवं लाभे वेदयते णिचि ॥ १११ ॥

'विद सत्तायाम्' । दिवादिरनुदात्तेत् । 'विद ज्ञाने' । अदादिः । 'विद विचारणे' । रुधादिः । 'विद्लृ लाभे' । मुचादिः ।

---

१. कथादावागर्वीये २. लजिप्रसङ्गे विवृतमेतत्.

---

† धनपालवाक्यस्थानां पकाराणां स्थाने वकारा एव पठ्यन्ते घपुस्तके.

इरित्पाठः पुनः प्रामादिकः। तथा च सर्वैर्लुङि अविददिति नित्य एवाङ् उदाजह्रे। 'विद चेतनाख्याननिवासेषु'। चितादिः। निपातनेष्विति धनपालशाकटायनौ॥

**दैन्येऽर्थे खिद्यते खिन्ते परिघाते तु खिन्दति।**

'खिद दैन्ये'। दिवादिः रुधादिश्च। 'खिद परिघाते'। मुचादिः। $"परितापे परितापनक्रियायामि'ति क्षीरस्वामी॥

**स्तुत्यादौ मन्दते हर्षे माद्येन्मादयते णिचि॥ ११२॥**

'मदि स्तुतिमोदमदस्वप्नगतिषु'। अत्र क्षीरस्वामी— "स्वप्नेनालस्यं लक्ष्यते। चन्द्रस्तु 'मदि जाड्ये' इत्येवाह" इति। 'मदी हर्षे'। 'शमामष्टानाम्' (७-३-७४) इति दीर्घः। 'मद तृप्तियोगे'। चितादिः। तृप्तिशोधन इत्यन्ये। तथा च 'तृप्तिशोधने तर्पणशुद्धौ' इति क्षीरस्वामी। हर्षयति ग्लपयति वेत्याद्यर्थे तु मदयति मदयत इति भवति। 'मदी हर्षग्लेपनयोः'[1]† इति घटादौ पठ्यते। अत्रार्थे माद्यातिर्मित् स्यादित्यर्थः॥

**यौ वा णावपवारणे छदत इत्येकं द्वितीयं छदे-**
**दन्यच्छादयतिच्छदोदिति पुनः स्यादूर्जनेऽर्थे मितः।**
**यत्तुच्छन्दयतीति णौ नुमि पदं तत् संवृताविष्यते**

'छद अपवारणे'। स्वरितेत्। शाकटायनस्य तु परस्मैपदी। 'छदिरूर्जने'। घटादिः। तच्च बलनं प्राणनं वा। अत्र च 'धात्वन्तराभ्युपगमे दरतीत्येके' इत्यादिपूर्वोक्तरीत्यनुसारेण[2] छदे-

---

१. ग्लेपनयोरिति पठित्वा 'ग्लेपनं दैन्यम्' इति माधवः. २. इदं च षट्त्रिंशश्लोकव्याख्याने द्रष्टव्यम्.

---

$ 'परिघाते' इति गपुस्तके पाठः. † 'ग्लापनयोः' इति गपुस्तके पाठः.

दित्युक्तम् । क्षीरस्वामिमैत्रेयरक्षितौ तु 'छद अपवारणे' इति यौजादिकस्यैवच्छदेरूर्जने छदयतीति मित्त्वार्थो घटादौ पाठ इत्याहतुः । 'छदि संवरणे' । 'छदेति तु बहवः । उरश्छदो दन्तच्छद इत्युदाजहार च क्षीरस्वामी । शाकटायनः पुनरात्मनेपदिष्वमुं‡ पपाठ ॥

संसर्गे णिचि मोदयेदिति भवेद्धर्षे पुनर्मोदते ॥ ११३ ॥

'मुद संसर्गे' । 'मुद हर्षे' । अनुदात्तेत् ॥

प्रत्येकं निदिनेद्योः स्तां नेदते नेदतीत्युभे ।
कुत्सायां सन्निकर्षे वा कुत्सामात्रे तु निन्दति ॥ ११४ ॥

'णिदृ णेदृ कुत्सासन्निकर्षयोः' । रूपभेदस्तु निनिदे निनेदे इत्यादौ व्यक्तः । 'णिदि कुत्सायाम्' ॥

छृदी सन्दीपने वा णौ छर्दयेच्छर्दतीत्युभे ।
छृन्ते छृणत्तीति पदे दीप्तिदेवनयोः श्रमि ॥ ११५ ॥

'छृदी स्थाने' छृदेति धनपालशाकटायनौ । तत्र चाद्ये छृण्णमन्त्ये छृदितमिति फलभेदः । क्षीरस्वामिनस्तु पकारान्तोऽयम् । यदाह—"'चृप छृप तृप दृप सन्दीपने' । संदीप्तिक्रियायां चृपादयश्चत्वारो धातवो वर्त्तन्ते । चर्पयति छर्पयति" इत्यादि । 'उच्छृदिर् दीप्तिदेवनयोः' ॥

सिधेः सिध्यति संराद्धौ सेधतीत्युदितो गतौ ।
शास्त्रमाङ्गल्ययो रूपमूदितस्तदिटा भिदा ॥ ११६ ॥

---

१. 'श्वीदितो निष्ठायाम्' इतीटो निषेधात्.

---

‡ 'च्वप्यमुम्' इति घपुस्तके पाठः.

'षिधु संराद्धौ' । '[1]षिधु गत्याम्' । एवमेव च बहवः । न्यासे तु 'एकाच उपदेशेऽनुदात्ताद्' (७-२-१०) इत्यत्र 'अस्योदित्त्वमेनार्षम्' इति स्थितम् । तत्र चोदित्त्वे 'उदितो वा' (७-२-५६) इति क्त्वायामिड्विकल्पात् सिद्ध्वा सिधित्वा सेधित्वेति भवति । अनुदित्त्वे तु स्वतः प्राप्तनित्येट्त्वमेवावतिष्ठते इति सिद्ध्वेति न भवति । अत्र च 'रलो व्युपधाद्धलादेस्संश्च' (१-२-२६) इति किद्भावविकल्पात् पक्षे गुणः । 'षिधू शास्त्रे माङ्गल्ये च' । 'शासनं शास्त्रमि'ति मैत्रेयरक्षितः शाकटायनश्च । 'षिधू शिष्टौ' इत्येव च चन्द्रः । 'शास्त्रं शास्त्रविषयं शासनम् । माङ्गल्यं मङ्गलविषया क्रिया' इति क्षीरस्वामी । शासनाद्धि शास्त्रमिति शास्त्रविषयक्रियापि शासनमेवेत्याशयः । तादिति सेधतीत्येतदेवेत्यर्थः । इटा भिदेति सिद्धा सेधितेत्यादौ 'स्वरतिसूति' (७-२-४४) इति इड्विकल्पेनास्य पूर्वस्मात् सिधेर्भेद इत्यर्थः ॥

शुन्धयेच्छुन्धते शुन्धेद्यौ वा णौ शौचकर्मणि ।
शुद्धौ शुन्धति भूवादेः शुधेः शौचे तु शुध्यति ॥ ११७ ॥

'शुन्ध शौचकर्मणि' । स्वरितेत् । शाकटायनस्य त्वात्मनेपदी । 'शुन्ध शुद्धौ' । 'शुध शौचे' । दिवादिः ॥

शर्धते शब्दकुत्सायामुन्दे शर्धति शर्धते ।
हिक्कादौ शर्धयत्यस्य शृधेः प्रसहने णिचि ॥ ११८ ॥

'शृधु शब्दकुत्सायाम्' । सा च पायुशब्दत्वादिति क्षीरस्वामी । 'शृधु मृधु उन्दे' । स च क्लेदः । हिक्कादित्वं पुनरुभयप-

१. 'षिध गत्याम्' इति निरुक्तार एव पाठः सिद्धान्तकौमुद्याम् .

दित्वे हेतुः । भूवादौ 'ह्रिक्क अव्यक्ते शब्दे' इत्यारभ्य केचित् स्वरितेतः पठ्यन्ते । तेषु चायं शृधिः । 'शृधु प्रसहने' ॥

बुध्यते बोधतीत्येवं बुधेरवगमे द्वयम् ।
बुधिरो बोधनार्थस्य बोधते बोधतीत्यपि ॥ ११९ ॥

'बुध अवगमने' । दिवादिर्भूवादिश्च । 'बुधिर् बोधने' । क्षीरस्वामी तु 'बुध' इति पठित्वा 'बुधिरिति नन्दी' इत्याह ॥

बध्नाति बन्धने बन्धेर्बाधयेदिति संयमे ।
यत्तु बीभत्सते तत् स्याद् वैरूप्येऽर्थे बधेः सनि ॥

अपरे पुनः पठन्ति —

[बध्नन् बीभत्सते बन्धे बाधयेदिति संयमे ।]

'बन्ध बन्धने' । क्र्यादिः । 'बध संयमने' । 'बध बन्धने'[1] । 'गुप्तिज्किद्भ्यः सन्' (३-१-५) 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' (३-१-६) इति सन् । अभ्यासेकारस्य च 'सन्यतः (७-४-७५)इति कृतस्य दीर्घः । संश्चास्माद्वैरूप्य इष्यत इत्याहुः । तच्च बीभत्सैव । एवं च बन्धे इत्यपि बन्धे पठितस्येत्यर्थः । अत्र च सन्नन्तस्याप्यवयवद्वारानुदात्तेत्त्वादात्मनेपदम् । तद्द्वारा हि समुदाय एव गवादाविव लिङ्गमासज्यते । गुपादीनां त्रिमुनिसम्मतेन नित्यसन्नन्तत्वेन केवलेषु गोपत इत्यादेस्तत्फलस्याभावात् जुगुप्सादेश्च समुदायस्यानुपदेशात् । न च नित्यसन्नन्तत्वे वृत्त्युक्तं गोपयतीत्यादि न सिध्येत् । यथासम्भवं प्रकृत्यन्तरात्[2] स्वार्थणि-

---

१ आदिना तेजयत्यादिपरिग्रहः. २. अन्या भूवादौ पठिता 'गुप गोपन' इत्याद्या नित्यसन्विषया प्रकृतिः, अन्या च चुरादौ पठिता भूवादौ चार्थान्तरे पठितेत्याशयः.

जादिना तत्सिद्धेः । व्यक्तं चैतत् 'पूर्ववत् सनः' (१-३-६२) इत्यत्र भागवृत्तौ ॥

गुधेर्गुध्नाति रोषेऽर्थे गुध्येत्तु परिवेष्टने ।

'गुध रोषे' । क्र्यादिः । 'गुध परिवेष्टने' । दिवादिः ॥

रुन्धे रुणद्ध्यावरणे कामेऽनावनुरुध्यते ॥ १२१ ॥

'रुधिर् आवरणे' । 'अनौ रुध कामे' । दिवादिः । अनुदात्तेत् । अनावित्यन्वित्युपसर्गे सति ॥

राध्नोति संसिद्ध्यर्थे श्नौ राध्येद् वृद्धावकर्मकात् ।

'राध साध संसिद्धौ' । 'राधोऽकर्मकाद्वृद्धावेव' । राधेरकर्मकाच्छ्यन् इत्येतावानेवात्र विवक्षितोऽर्थः । वृद्धिग्रहणन्त्वकर्मकक्रियोदाहरणमात्रम् । एवमकारश्चैवमर्थात् सिद्धाया व्यावृत्तेरनुवादमात्रम् । तथा च 'कर्मवत् कर्मणा तुल्यक्रियः' (३-१-८७) इत्यत्र भाष्यम्—'राध्यत्योदनः स्वयमेव' इति । अत्र हि सिध्यतीत्यर्थः; नतु नदी राध्यतीतिवद् वर्धत इति । तथैव 'राधीक्ष्योर्यस्य विप्रश्नः' (१-४-३९) इत्यत्र वृत्तिः । 'देवदत्ताय राध्यति । नैमित्तिकः पृष्टः सन् देवदत्तस्य दैवं पर्यालोचयतीत्यर्थः' इति ॥

ऋध्नोतीति भवेद् वृद्धावृध्यतीत्यत्र तु श्यनि ॥ १२२ ॥

'ऋधु वृद्धौ' । आद्यः स्वादिः ॥

गृधेर्गृध्यति काङ्क्षायां गर्धेस्तत्रैव गर्धयेत् ।

'गृधु अभिकाङ्क्षायाम्' । दिवादिः । 'गर्ध अभिकाङ्क्षायाम्' ॥

---

१. वक्ष्यमाणभाष्यवृत्त्यानुगुण्याय यथाश्रुतान्वयपरित्यागेन व्याचष्टे—राधेरिति.
२. सकर्मकव्यावृत्तेरित्यर्थः । एवञ्चैवकारस्य भिन्नक्रमतया 'अकर्मकाद्' इत्यनेनान्वयः फलितः. ३. दैवस्य कर्मणो धात्वर्थेऽन्तर्भावादकर्मकत्वं द्रष्टव्यम्.

छेदने पूरणे चार्थे वर्धेर्वर्धयतीति णौ ॥ १२३ ॥
तदेव रूपं भाषार्थे वृधेर्वृद्धौ तु वर्धते ।

'वर्ध च्छेदनपूरणयोः' । वृधु भाषार्थः । 'वृधु वृद्धौ' । अनुदात्तेत् ॥

याचने वनुते शब्दे सम्भक्तौ च वनेदिति ॥ १२४ ॥
क्रियासामान्यवृत्तेश्च तदेव स्यात् पदं मितः ।

'वनु याचने' । तनादिः । 'वनोति वनुतः वन्वन्ति । ववान ववनतुः ववनुरिति चान्द्रा उदाहरन्ति' इति ब्रुवन्मैत्रेयरक्षितः परस्मैपदिनश्चैनं मेने । 'ष्टन वन शब्दे । 'वन षण सम्भक्तौ' । 'अर्थभेदाद्द्विष्पाठ' इति मैत्रेयरक्षितः । 'ष्टन ध्वने'ति तु क्षीरस्वामी । 'कगे नोच्यते' । 'वनु च नोच्यते' । अस्यायमर्थ इति नोच्यते । क्रियासामान्यमस्यार्थ इति यावत् । 'इह शास्त्रे नोच्यत' इत्येके' इति मैत्रेयरक्षितः । शास्त्रान्तरात् प्रयोगोऽस्यावगन्तव्य इति यावत् । क्षीरस्वामी तु—'अस्यायमर्थ इति नोच्यते' । अनेकार्थत्वान्नोच्यत इति योऽर्थस्तत्रार्थे कगिरित्येके' इति । अन्ये तु स एवाह—'क्रियासामान्यवाचित्वान्नोच्यते' इति । मित इति । एतच्च मित्त्वमनुपसर्गस्य विकल्प्यते, सोपसर्गस्य तु नित्यम् । वानयति वनयतीति यदाह—'ज्वलह्वलह्मलानामनुपसर्गाद्वा' । 'ग्लास्नावनुवमां च' इति । एषामनुपसर्गाणां मित्त्वं वा भवती-

१. न केवलं कगेरर्थावचनं, किन्तु वनेश्चेत्येवमर्थं चकारः । समुच्चेयं च व्यवहितं स्मारयितुं 'कगे नोच्यते' इत्यस्योपन्यासः. २. वनुधातौ इत्यर्थः स्यात्.

त्यर्थः। एतच्च 'अनन्तरस्य विधिर्वा' इति न्यायान्न[1] वनोतेः। धनपालस्तु तमेव[2] प्रस्तुत्याह—'वनुं घटादिषु पठन्ति द्रमिडाः। तेषां मित्संज्ञा। वनयति। आर्यास्तु विभाषामित्त्वमिच्छन्ति। तेषां वानयति वनयति' इति ॥

**स्तम्भे मानयते ज्ञाने मन्यते मनुते पदम् ॥ १२५ ॥**
**पूजायां मानयेन्मानेद् यौ मीमांसेत तङ्सनोः।**

'मन स्तम्भे'। चितादिः। 'मन ज्ञाने'। दिवादिः। 'मनु अवबोधने'। तनादिः। 'मान पूजायाम्'। भूवादौ त्वयमनुदात्तेत्। 'मान्बधे'ति (३-१-६) सनि 'अवयवे कृतं लिङ्गम्' इति न्यायेन तङ्। संश्चास्मात् जिज्ञासार्थादित्याहुः[3]। विचारणार्थादिति तु भोजीया मीमांसकाश्च। 'मीमांसा स्याद्विचारणा' इति च नैघण्टुकाः। एवं[4] च जिज्ञासाशब्देनापि वा विचारणैव लक्ष्यताम् ॥

**ध्वनयेदित्यदन्तस्य ध्वनेः शब्दे ध्वनेच्चापि ॥ १२६ ॥**

घटादौ चायं कैश्चित् पठ्यते। तथा च 'ध्वन शब्द इत्येके' इति मैत्रेयरक्षितः। क्षीरस्वामिधनपालावप्यत्रैवानुकूलौ। 'दलिवलिस्खलिरणिध्वनिक्षपित्रपयश्च' इति च भोजदेवः। एते च मित्संज्ञा इत्यर्थः ॥

**शब्दे च देवशब्दे च स्तनति स्तनयेत् क्रमात्।**

'ष्टन वन शब्दे'। 'स्तन गदी देवशब्दे'। नचास्यापि

---

१. न वनोतेः=न तानादिकस्य, किन्तु घटादौ प्राक्पठितस्यैवेत्यर्थः। घटादिपठितश्चोदित्करणसामर्थ्यादन्यो धातुः, न तानादिकानुवाद इत्ययमर्थः 'तदेव (वनेदित्येव) पदम्' इति वदता देवेनैव सूचित इत्यभिप्रायः. २. वनोतिमेव. ३. तथा च काशिका—'मानेर्जिज्ञासायाम्' इति. ४. एवञ्च=बहुसम्मत्या मीमांसाशब्दस्य विचारणावाचकत्वे च.

दन्त्यपरसादित्वात् षोपदेशत्वम् । स्म्यादयेकाच्साहचर्यादनेकाचां नैतदित्याहुः । व्यक्तं चैतत् क्षीरस्वामिमैत्रेयरक्षितवृत्त्योः ॥

श्रद्धोपकरणार्थस्य तनेस्तनाति तानयेत् ॥ १२७ ॥
दैर्घ्यार्थस्योपसर्गात्तु विस्तारे तनुतेऽतनोत् ।

'तनु श्रद्धोपकरणयोः' । (†धनपालशाकटायनौ?) 'उपसर्गाच्च दैर्घ्ये' । उपसर्गात्तनेर्दैर्घ्येऽर्थे णिज् भवतीत्यर्थः । आतनति आतानयेत् । 'तनु विस्तारे' ॥

दाने सनोति सनुते सम्भक्तौ तु सनेदिति ॥ १२८ ॥

'षणु दाने' । तनादिः । 'वन षण संभक्तौ' ॥

णौ गोपयति भाषार्थे निन्दायां से जुगुप्सते ।
गोपायेद्रक्षणे त्वाये व्याकुलत्वे तु गुप्यति ॥ १२९ ॥

गुप भाषार्थः । 'गुप गोपने' । अनुदात्तेत् । गोपनकुत्सनयोरिति मैत्रेयरक्षितः । निन्दायामिति । अत्र 'गुप्तिज्किद्भ्यः सन्' (३-१-५) इत्यत्र जयादित्यः— 'निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्यते' इति । 'गुपू रक्षणे' । 'गुपूधूप' (३-१-२८) इत्यादिनायः । 'गुप व्याकुलत्वे' । दिवादिः ॥

धूपायतीति सन्तापे भाषार्थे धूपयेदिति ।

'धूप सन्तापे' । धूप भाषार्थः ॥

क्षिप्यति प्रेरणे शे तु क्षिपति क्षिपते पदे ॥ १३० ॥

'क्षिप प्रेरणे' । अत्र भूवादिसूत्रे सुधाकरः— "'संपृचादि' (३-२-१४२) सूत्रे पारायणिकैरनुक्तोऽपि क्षिपिर्दैवादिको जया-

---

१. एषां गुपादिषु यथासङ्ख्यं सम्बन्धः.

---

† अतः प्राक् 'चन श्रद्धोपहननयोरिति' एतावद् गलितमिति प्रतिभाति.

दित्येनोररीचक्रे 'क्षिप प्रेरणे इति दिवादिस्तुदादिश्च गृह्यते' इति वदता। अत एव व्यासप्रयोगः—

'द्वाविमावम्भसि क्षिप्य गळे बद्ध्वा महाशिलाम्।
धनिनं चाप्रदातारं दरिद्रं चाप्रवासिनम्॥'

इति। 'संक्षिप्य संरम्भमसह्यपक्षम्' इति भट्टिः। नो खलु पारायणिकैरप्रदर्शनादभावानुमानं, लक्ष्यपारतन्त्र्येण तेषामवस्थानात्, शिष्टप्रयोगोपगीतनाम्नः शब्दराशेरनाश्रयणे प्रधानाविरोधाल्लक्षणस्यालक्षणत्वं मा भूदिति" इति॥

सन्तापेऽर्थे तपेद् दाहे तापयेत् तपते तपेत्।
ऐश्वर्ये वा दिवादित्वात् तप्यते तपतीति च॥ १३१॥

'तप सन्तापे'। 'तप दाहे'। युजादिः स्वरितेत्। शाकटायनस्य त्वात्मनेपदी। 'तप ऐश्वर्ये वा'। तपेत्ययं धातुरैश्वर्ये तङ्[1]श्यनौ वोत्पादयतीत्यर्थः। एवं च दिवादित्वेनैव तदविनाभूतमनुदात्तेत्त्वम[2]पि दर्शितं द्रष्टव्यम्। पतेत्येके। तथा च 'इरज्यति पत्यते क्षयति राजतीति चत्वार ऐश्वर्यकर्माणः' इति नैरुक्ताः। केचित्तु वेत्येतद् 'वावृतु वरणे' इत्युत्तरधात्वंशमाहुः। तथा च 'ततो वावृत्यमाना सा रामशालां न्यविक्षत' इति भट्टिः। एवं च 'णौ वर्त्तयति भाषार्थे' इत्यत्र 'वरणे श्यनि वृत्येत' इत्यप्यनुक्तिः शोभतेतराम्[3]॥

आक्रोशे शप्यते शप्येच्छपते शपतीति च।

१. तत्सम्बद्धम्. २. अपिशब्दग्राह्यं श्यन्विषयत्वम्. ३. एतच्च 'वर्तयेद् भाषणार्थे णौ' इति प्राक् (९६. श्लोके) पठितस्योपलक्षणं यथाश्रुतपाठस्य काप्यदर्शनात्.

**उपालम्भे शपेर्वाक्यात् तङि स्याच्छपते पदम् ॥ १३२ ॥**

'शप आक्रोशे' । दिवादिर्भूवादिश्च । वाक्यादिति । 'शप उपालम्भने' इति वार्तिकेन । उपालम्भन इत्येव तु प्रायः पठन्ति । तदात्राप्युपालम्भ इति पाठः । तत्र वाचा शरीरस्पर्शनमुपालम्भनम् । तच्चैतज्जयादित्यमतम् । एतच्च 'त्वत्पादौ स्पृशामि नैतन्मया कृतमित्येवंविधः शपथविशेषः' इति व्याचख्युः । सुधाकरश्चाह—'वाचा शरीरस्पर्शने=तव शरीरं स्पृष्ट्वा शपे इति यल्लोकप्रसिद्धं तत्र शपेस्तङ्' इति । कैयटस्तु 'उपलम्भनं प्रकाशनम्' इति । भागवृत्तिकारः पुनः प्राह—'शपेरुपलम्भने प्रकाशने कथने वर्तमानादात्मनेपदं भवति । देवदत्ताय शपते । देवदत्तं यत्किञ्चित्कथयतीत्यर्थः । वाचा शरीरस्पर्शनमुपालम्भनमित्यदः कस्यचित् काव्यम्' इति । तत्र च श्लाघह्नुङ्स्थेति (१-४-३४) सम्प्रदानत्वाच्चतुर्थी । शाकटायनस्त्वाह—'उपलम्भनं प्रकाशनं देवदत्ताय शपते । देवदत्तं प्रकाशयति । एवम्भूतोऽसाविति देवदत्तमाचष्ट इत्यर्थः । अथवा स्वाभिप्रायस्य परत्राविष्करणमुपलम्भनम् । देवदत्ताय शपत इति । प्रोषिते देवदत्ते तस्य भावाभावयोरुपलब्धव्ययोः कंचिदासेवेते'[2] इति । चान्द्रभोजकौमारास्तु 'शपः शपथे' इत्येवमाहुः । तदेतेष्वपि पक्षेषु लक्ष्यवशादेव समस्तस्य व्यवस्थास्थेया ॥

**तृप्नोति तृप्यतीत्येते प्रीणने श्नौ श्यनि क्रमात् ।**
**तृप्तावन्यतरस्यां णौ स्यात्तं तर्पति तर्पयेत् ॥ १३३ ॥**

---

१. हरदत्तमिश्राः. २. एवञ्च देवदत्तभावाभावान्यतरविषयं स्वाभिप्रायमाविष्करोतीत्यर्थ उदाहरणस्य फलितः.

'तृप प्रीणने' । तत्र 'पीयूषस्येह तृप्नुतम्' इत्यादिदर्शनात् तृप्तिरेव । केचित् पुनः स्वादौ तृपिं न पठन्ति । तथा च 'क्षुभ्नादि' (८-४-३९) सूत्रे न्यासकृता 'व्यत्ययो बहुलम्' (३-१-८५) इतिच्छान्दसोऽत्र श्नुरुक्तः । अत्र च 'क्षुभ्नादिषु च' इति णत्वाभावः । तेषु च तृप्नोतिशब्दस्यैव पाठात् तसादिषु णत्वं भवत्येव । अतृप्नोत तृप्नोत्वित्यत्र तु 'एकदेशविकृतमनन्यवद् भवति' इति न्यायान्न भवति । 'तृप तृप्तौ' । तुदादिश्चायम् । सन्दीपन इति तु युजादौ क्षीरस्वामी । प्रीणन इति बहवः ॥

**संघाते डेपयेतेति क्षेपे डिपति डिप्यति ।**
**डेपयेदिति चत्वारि णिचि शे श्यनि णौ ड्रिपेः ॥ १३४ ॥**

'डिप सङ्घाते' । चितादिः । 'डिप क्षेपे' ॥

**कल्पते शपि सामर्थ्ये कल्पयत्यवकल्कने ।**
**अदन्तस्य कृपेर्णौ तु दौर्बल्ये कृपयेदिति ॥ १३५ ॥**

'कृपू सामर्थ्ये' । 'कृपो रो लः' (८-२-१८) इति लः । 'कृपेश्च' इति 'कृपेस्तादर्थ्ये' इति वा णिच् । ते (*) 'भावयत्यवकल्कने' इत्यत्र दर्शिते । 'दार कृप श्रथ दौर्बल्ये' ॥

**क्षम्पेः क्षम्पयति क्षान्त्यां प्रेरणे क्षपयेदिति ।**

'क्षपि क्षान्त्याम्' । 'क्षप प्रेरणे' । भीमसेनेन कथादिष्वपठितोऽप्ययं 'बहुलमेतान्निदर्शनम्' इत्युदाहरणत्वेन धातुवृत्तौ पठ्यते ॥

---

१. न केवलमयं युजादिः, किन्तु तुदादिरपीत्यर्थः. २. इदं तृतीयश्लोके.

---

* 'च' इति पाठः स्यात्.

दिवादेः कुप्यति क्रोधे भाषार्थे कोपयेत् कुपेः ॥ १३६ ॥

'कुप क्रोधे' । कुप भाषार्थः ॥

आपयत्यापतीत्यापेर्यौ वा णौ लम्भने पदे ।
व्याप्त्यर्थस्यास्य तु स्वादेराप्नोतीति §पदं भवेत् ॥

'आपॢ लम्भने' इत्यत्र मैत्रेयरक्षितेनापत इत्यात्मनेपदमप्युदाहृतमुपलभ्यते । दैववशात्तु तस्यापि[1] नैतदस्तीति प्रतीयते । तदनुसारेणैव हि प्रायेण दैवः प्रवर्त्तमानो दृश्यते । 'आपॢ व्याप्तौ' ॥

स्पर्शे चुपति मन्दायां गतौ तु शपि चोपति ।

'चुप स्पर्शे' । तुदादिः । 'दीर्घोऽकितः' (७-४-८३) इत्यत्र भाष्ये चेच्छिद्यते चोच्छुप्यते इति 'छे च' (६-१-७३) इत्युदाहरणाच्छकारादिरयं[2] युक्तः । 'चुप मन्दायां गतौ' ॥

शपि तोपति हिंसायां तत्रैव तुपतीति शे ॥ १३८ ॥
तत्रैव शशपोस्तुम्पेदर्दने तुम्पयेण्णिचि ।

'तुप तुम्प हिंसायाम्' । अत्र च 'अनिदिताम्' (६-४-२४) इति नलोपे कृते 'शे तृम्फादीनाम्' इति वार्तिकेन नुम् । आदिशब्दः प्रकारार्थः सादृश्यार्थः । तेन तुदादिषु ये नोपधाः पठ्यन्ते, ते तृम्फादयः । 'तुबि तुपि अर्दने' इति मैत्रेयरक्षितः । लुबि तुबीत्येव बहवः ॥

लुम्बयेत् तुम्बयेदर्दे शपि लुम्बति तुम्बति ॥ १३९ ॥

'लुबि तुबि अर्दने' ॥

---

१. मैत्रेयरक्षितस्यापि. २. भौवादिकस्तु चादिरेव सर्वसम्मतः.

---

§ 'भवेत् पदम्' इति गपुस्तके पाठः.

**हिंसायां वक्रसंयोगे चुम्बयेच्चुम्बति क्रमात् ।**

'चुबि हिंसायाम्' । 'चुठि इत्येके' इति मैत्रेयरक्षितः । 'चुबि वक्रसंयोगे' ॥

**णिचि कुम्बयतीति स्याच्छादने शपि कुम्बति ॥ १४० ॥**

'कुबि छादने' ॥

**गार्ध्ये लुभ्यति मोहार्थे तुदादेर्लुभतीति शे ।**

'लुभ गार्ध्ये' । दिवादिः । तच्चाभिकाङ्क्षा । 'लुभ विमोहने' ॥

**दृभी भये विभाषा णौ स्यातां दर्भति दर्भयेत् ॥ १४१ ॥**
**अनीदितश्च सन्दर्भे दृभति ग्रन्थ ईदितः ।**

विभाषेत्याद्यनुकर्षणार्थश्चः । तत्र चाणिच्पक्षे 'दृभी भये' 'दृभ सन्दर्भे' इत्यनयोरीदितो दृब्धमिति भवति, अनीदितस्तु दृभितमितीत्यभिप्रेत्य **अनीदित** इत्युक्तम् । बहवस्त्वन्त्यं न पठन्ति । 'दृभी ग्रन्थे' । तुदादिः । स च ग्रन्थनम् ॥

**स्तभ्नाति स्तभ्नुयात् स्तुभ्नात्यपि स्तुभ्नोति सौत्रयोः ॥**
**स्तम्भते प्रतिबन्धार्थे स्तम्भेऽर्थे स्तोभते शपि ।**

'क्र्यादिभ्यः श्ना' । 'स्तन्भु स्तुन्भु स्कन्भु स्कुन्भु स्कुञ्भ्यः श्नुश्च' (३-१-८२) इति सौत्रयोर्धात्वोः श्नुश्नौ । 'ष्टभि स्कभि प्रतिबन्धे' । अनुदात्तेतौ । 'औपदेशिकोऽयं टकारो न तु ष्टुत्वनिबन्धन इत्येके' । इति क्षीरस्वामिमैत्रेयरक्षितौ । तदा ष्टम्भते इत्येवं रूपम् । स्कन्भुस्कुन्भ्वोः पुनः स्कभ्नाति स्कुभ्नुयात् स्कुभ्नाति स्कुभ्नुयात् स्कम्भत इति सुशकमूहितुमित्याशयः । 'ष्टुभु स्तम्भे' ॥

**हिंसाभाषणयोः शोभेच्छोभार्थे शुभतीति शे ॥ १४३ ॥**
**शोभते शपि दीप्त्यर्थे शुम्भेरन्यत् तङः समम् ।**

'शुभ शुम्भ भाषणे हिंसायां च'। क्षीरस्वामी " 'शुस्भ भाषणे हिंसायां च' भासन इति च दुर्गः। षोपदेशोऽयमिति गुप्तः 'सावष्टम्भनिषुम्भसंभ्रमनमद्भूगोले' त्यादिदर्शनाद्" इत्याह। धनपालशाकटायनौ (तं?) यथा दुर्गः[1]। 'शुभ शुम्भ शोभार्थौ' 'शुभ दीप्तौ'। तत्र च तङोऽन्यच्छुम्भेरपि सममित्यर्थः, हिंसाद्यर्थत्रये शशपोः शुम्भतीति भवतीति यावत्। तृन्फादित्वान्नुम्[2]॥

**क्षुभ्नाति क्षोभ [illegible]**

'क्षुभ सञ्चलने'। क्र्यादिर्भूवादिर्दिवादिश्च। मध्यमोऽनुदात्तेत्। आद्ये 'क्षुभ्नादिषु च' (८-४-३९) इति णत्वाभावः॥

**नभ्येन्नभ्नाति नभते हिंसायां तत्तुभेः समम् ।**

'णभ तुभ हिंसायाम्'। दिवादिः क्र्यादिर्भूवादिश्च। अन्त्योऽनुदात्तेत्॥

**जृम्भणे जम्भते याभे जम्भेन्नाशे तु जम्भयेत् ॥ १४५ ॥**

'जभ जृभि गात्रविनामे'। 'रधिजभोरचि' (७-१-६१) इति नुम्। 'जभीत्येके' इति मैत्रेयरक्षितः। तदा[2] निष्ठायां जब्धम्। अन्यदा जभितम्। 'भयविपरीतो मैथुने'। विपरीत इति यभेत्यर्थः। 'जभ इत्येके' इति मैत्रेयरक्षितः। जभ चेति धनपालः। यभजभेति शाकटायनः। न्यासे तु 'रधिजभोः' (७-

---

१. यथा दुर्गः=दुर्ग इव तावपि भासने इत्यर्थं वदत इत्यर्थः. २. ईदित्त्वे.

१-६१) इत्यादौ जभ जृभि गात्रविनाम इत्येव पाठात् जभि- मैथुने नास्तीति गम्यते, वृत्तौ च 'रेभिश्च भान्तेष्वथ मैथुने यभिः' इत्यत्र रब्धा यब्धेत्येवोदाहृतेः। 'जर्भि नाशने' ॥

**प्रेरणे लाभयेल्लाभेः प्राप्त्यर्थे लभते शपि।**

'लाभ प्रेरणे'। कथादिः। तत्फलं पुनरललाभदित्यत्रा- ग्लोपित्वाद्ध्रस्वाभावः। 'लभेति सभ्या' इति क्षीरस्वामी। 'डुल- भष् प्राप्तौ' ॥

**अषितः क्षाम्यति क्षान्तिः क्षमूषः क्षमते क्षमा ॥ १४६ ॥**

'क्षमू सहने'। 'शमामष्टानां दीर्घः' (७-३-७४) इति दीर्घः। 'क्षमूष् सहने'। अनुदात्तेत्। षित्त्वादङ्। स च 'स्त्रियां क्तिन्' (३-३-९४) इत्यस्यापवादः। अषितस्त्वौत्सर्गिकः क्तिन्नेव भव- तीति क्षान्तिरित्युक्तम्। 'अनुनासिकस्य क्विझलोः क्ङिति' (६- ४-१५) इति दीर्घः ॥

**गत्यादावमतीति स्याद्रोगे स्यादामयत्यमेः।**

'अम गत्यादिषु'। ते च 'कन दीप्तिकान्तिगतिषु। ष्टन वन शब्दे। वन षण सम्भक्तौ' इति समनन्तरोक्ताः। "अपरे 'अव रक्षणगती' त्यादयो गत्यादय इत्याहुः" इत्यपि धनपालः। 'अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचन- क्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु' इति विदूरे व- क्ष्यमाणा अपि गृह्यन्ते इत्याहुरित्यर्थः। 'अम रोगे'। 'आद्यन्त- वदेकस्मिन्' (१-१-२१) इति अमन्तत्वेऽपि 'न कम्यमिचमाम्'

---

१. अनिट्कारिकेयम्.

इति मित्त्वनिषेधादमेर्हेतुमण्णिच्यप्यामयतीति द्रष्टव्यम् । अयं च निषेधः कमिचमिसाहचर्याज्जौवादिकस्यैवार्हतीति 'नान्ये मित' इत्येव चुरादिणिचिं निषेद्धव्यम् ॥

**चलने भ्रमति भ्रम्येच्छमादेर्भ्राम्यति भ्रमेत् ॥ १४७ ॥**

'भ्रमु चलने' । 'भ्रमु अनवस्थाने' । दिवादिः । 'वा भ्राश' (१-३-७०) इत्यादिना वा श्यन् ॥

**यमेरुपरमे यच्छेद्यमयेत् परिवेषणे ।**

'यमु उपरमे' । 'उदित्त्वमस्य केचिन्नेच्छन्ति' इति मैत्रेयरक्षितः । क्षीरस्वामी तु यमेत्येव पठित्वाह—'उदिदिति श्रीभोजः' इति । तत्फलं तु यत्वेत्येत्र प्राप्ते यमित्वेतीड्विकल्पः । 'अनुदात्तोपदेश' (६-४-३७) इत्यादिना नलोपः । 'इषुगमियमां छः' (७-३-७७) । 'इषेश्छत्वमहलीति वक्तव्यम् । इह मा भूत् । इष्याति इष्णाति' इति भाष्याद् ईषेत्येवार्षः पाठः । 'यम च परिवेषणे' । अत्रार्थे यमिर्णिचमुत्पादयति मिच्च भवतीत्यर्थः । 'यमोऽपरिवेषणे' इति तु क्षीरस्वामिधनपालौ । घटादावप्येवमेव पठन्ति । अर्थे त्वस्य विवदन्ते । तत्र क्षीरस्वामी तावद्—'यम उपरम इत्यस्य धातोः परिवेषणादन्यत्रैवार्थे मित्संज्ञा । यमयति नियमयति संयमयति । परिवेषणे तु यामयति श्राद्धे । यामयति चन्द्रम्' इति । एवमेव च चान्द्रकौमारभोजीयाः । मैत्रेयरक्षित-

१. अन्यथा दिवादिक्र्याद्योरुदित्त्वाभावेन हलि च्छत्वाप्रसङ्गाद् इष्यतीष्णातीत्यनयोः अहलीति निषेधोदाहरणत्वमसङ्गतं स्यात् । 'इषु इति वक्तव्यम्' इति वाच्ये तथानुक्त्या च तुदादावप्यननुबन्ध एव पाठो वार्तिककारस्य. २. 'यमोऽपरिवेषणे' इत्येव सर्वे पठन्तीत्यर्थः.

स्तु "अपरिवेषणे यमिर्न मित् । यामयति । परिवेषणे यमयति ब्राह्मणान् । कथं नियमयति संयमयतीति । 'तत्करोति' इति प्रातिपदिकाण्णिच्प्रत्ययः" इति । धनपालश्च निषेधपक्षमेव पर्यग्रहीत् । 'न पादम्याङ्यम' (१-३-८९) इत्यत्र च जयादित्यः— "आयामयते 'यमोऽपरिवेषणे' इति मित्संज्ञा प्रतिषिध्यते" इति । व्यानञ्ज चैताज्जिनेन्द्रः—" 'न कम्यमिचमाम्' इत्यतो नेति वर्तते" इति । 'अनन्तरस्य 'विधिर्वा' इति च नीतिः 'नेति वर्तते' इत्येतदेवानुवर्तते 'घटादयो मितः' इति मित्त्वविधेः प्रतिषेधान्तरितत्वात् । शाकटायनः पुनर्घटादौ चुरादौ च पक्षद्वयमपि परिजग्राह । तत्र च क्षीरस्वाम्यादिपक्षे यामयेदिति कामं पठितव्यम् । धनपालपक्षेऽप्येवमेव चुरादौ द्रष्टव्यम । शाकटायनपक्षे पुनरुभयत्राप्युभयमिति विभागः ॥

स्यमेः स्यमाति शब्दार्थे वितर्के स्यामयेत णौ ॥ १४८ ॥

'स्यमु स्वन ध्वन शब्दे' । 'स्यम वितर्के' । चितादिः । 'नान्ये मित' इति मित्त्वाभावः । पूर्वस्य हेतुमण्णिचि मित्त्वात् स्यमयेत् स्यमयेतेति द्रष्टव्यम् । न्यासकारस्तु 'नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः' (६-२-१३३) इत्यत्र स्यालशब्दव्युत्पादनार्थं 'स्यल वितर्के' इत्यपाठीत् ॥

आलोचने शामयते शाम्यत्युपशमे श्यनि ।

'शम लक्ष आलोचने' । चितादिः । 'शमु उपशमे' । घटादौ च 'शमो दर्शने' इति पठ्यते । शाम्यतेर्दर्शनेऽर्थे मित्संज्ञा न भवतीत्यर्थः । अदर्शने भवतीति तु क्षीरस्वामी । एवमेव चान्द्र-

१. एतदेव='नेति वर्तते' इत्येवंरूपं विवरणमेव । अनुवर्तते=अनुगृह्णाति

कौमारभोजीयाः। धनपालस्तु 'दर्शने न भवती' त्युक्त्वा 'अदर्शने इत्येके' इत्याह। शाकटायनश्चात्रैवानुकूलः। एषु च 'अनन्तरस्य विधिर्वे'ति नीत्या प्रथम एव पक्षो युक्तः। नञ्प्रश्लेषक्लेशश्चैवं परिहृतो भवति। तत्र च दर्शने निशामयति रूपमिति भवति। अन्यत्र निशामयति श्लोकं, शमयति रोगमिति॥

**भामेर्भामयति क्रोधे तत्रैव शपि भामते॥ १४९॥**

'भाम क्रोधे'। आद्यः कथादिः। अन्त्योऽनुदात्तेत्॥

**वित्तत्यागे व्यययति व्ययति व्ययते गतौ।**

'व्यय वित्तसमुत्सर्गे'। कथादिः। 'व्यय गतौ'॥

**पूरेराप्यायनेऽर्थे स्यात् पूर्यते पूरयेदपि॥ १५०॥**

'पूरी आप्यायने'। दिवादिर्ग्रसादिश्च॥

**स्तेये चोरयतीति स्याण्णिचि चोरयते चुरेः।**

केचित्त्वेतन्न पठन्ति। 'चुर स्तेये'। 'चुर छेदने'। तुदादिः। णिच्चास्माद्धेतुमाण्णिच्। चोरयत इत्येतच्च चोरयतीत्यस्याप्युपलक्षणम्। इति स्यादित्येतद्वा चुरेरित्यनेन सम्बध्य चुरश्चोरयतीति स्यात्, चोरयत इति चेति व्याख्येयम्। चुरतीति तु वाच्ये णिचा निर्देशो वैचित्र्यार्थः। सर्वथाप्यत्रार्थतः शब्दतश्चाञ्जस्यं नैव पश्यामः। 'छुर च्छेदने' इत्येव च पाठः। तथा च 'सामोन्मुखेनोच्छुरिता प्रियेण' इति भट्टिः। 'स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक्स्मितम्' इत्यमरसिंहश्च। तच्चैतत्

१. ते च क्षीरस्वामिपक्ष्याः. २. स च मित्त्वप्रतिषेधपक्षः. ३. क्लेशो ह्ययमवर्जनीयो मित्त्वविधिवादिनो दर्शने मित्त्वं मा भूदिति. ४. आस्वादीय इत्यर्थः.

'छुर च्छेदने क्तः । यावाद्भि (५-४-२९) कन्नि'ति कविकामधेनौ व्याख्यातम् । 'कृन्तत्यचोटयदचुण्टयदच्छुरच्च' इत्याख्यातनिघण्टुश्च । [2]तदेवमपाठपक्ष एव न्याय्यः, चितादौ [1]चेच्छुरिर्न दृश्यते ।

[3]स्तेये चोरयतीति स्याच्चुरेश्छेदे चुरेदिति ।

इति तु क्वचित् पाठः । तदापि चकारादित्वमयुक्तमेव । यदा तु छकारादिरेवापठ्यत, तदापि कथञ्चित् सादृश्यं नेयम् ॥

**शूरयेतेति विक्रान्तौ शूर्यते स्तम्भहिंसयोः ॥ १५१ ॥**

'शूर वीर विक्रान्तौ' । [4]पदादी । 'शूरी हिंसास्तम्भयोः' । दिवादिरनुदात्तेत् ॥

**गुरते गूरयेतेति शे णावुद्यमने तङि ।**
**श्यनि गूर्यत इत्येवं गतिहिंसनयोस्तङि ॥ १५२ ॥**

'गुरी उद्यमने' । तुदादिः । 'गूर उद्यमने' । चितादिः । 'धूरी गूरी हिंसागत्योः' ॥

**संशये चारयेद्गत्यां चरति**

'चर संशये' । 'चर गतौ भक्षणे च' । यथा तु 'भक्षणेऽपि प्रयुज्यते चरिः' इति मैत्रेयरक्षितः, तथा नायं पाठोऽस्ति । अपि त्वर्थवशेन केनाचित् प्रक्षिप्त इति गम्यते; तथा 'चर गतिभक्षणयोरि'ति[5] ॥

---

१. छेदनार्थे चुरतीत्याख्यातस्य सत्त्वे तदत्रापाठिष्यत्. २. उक्तप्रकारेण तुदादेर्णिजुदाहरणस्य चकारादित्वस्य चासामञ्जस्यादित्यर्थः. ३. इदमर्धं रान्तशेषतया दैवग्रन्थे पठ्यते 'गतौ शलती'ति (१५४) श्लोकात् प्राक्. ४. आगर्वीयावित्यर्थः. ५. मैत्रेयोक्तिपर्यालोचनया 'चर गतौ भक्षणे च' इति वा 'चर गतिभक्षणयोः' इति वा पाठो नास्तीति प्रतीयते इति वाक्यार्थः.

ईरयतीरति ।

**ईरेः क्षेपे विभाषा णौ लुकीर्त्ते गतिकम्पयोः ॥ १५३ ॥**

'ईर क्षेपे' । 'ईर गतौ कम्पने च' । अनुदात्तेत् । गतावित्यैव बहवः ॥

**गतौ शलति संवृत्यां चलने शलते शलेः ।**

'शल हुल पतॢ गतौ' । ज्वलादयः । 'शल श्वल्ल आशुगमने' इति ज्वलादौ क्षीरस्वामी । श्वल श्वल्लेति तु मैत्रेयरक्षितः । तत्र चाद्यं पाठमाश्रित्य गतावित्येवोक्तम् । पाठान्तरेऽपि वा गतिग्रहणेनाशुगतिरपि कामं गृह्यते । 'शल चलनसंवरणयोः' ॥

**समाधौ शीलतीति स्याच्छीलयत्युपधारणे ॥ १५४ ॥**

'शील समाधौ' । 'शील उपधारणे' । तच्चाभ्यासः ॥

**कलेः कालयति क्षेपे गतिसङ्ख्यानयोर्द्वयोः ।**
**कलयेच्छब्दसङ्ख्यानविषये कलते शपि ॥ १५५ ॥**

'कल विल क्षेपे' । 'कल गतौ सङ्ख्याने च' । कथादिः । 'कल शब्दसङ्ख्यानयोः' ॥

**महत्त्वे पोलति पुलेर्णौ तु तत्रैव पोलयेत् ।**

'पुल महत्त्वे' । तुदादौ चायं क्षीरस्वामिनः । भूवादौ च स एवाह—'तुदादौ पुलती'ति । तदा पुलेदिति[1] पाठः । चुरादौ तु समुच्छ्राय इति पपाठ ॥

**सङ्घाते पूलयेत् पूलेत् पूलेः स्तां णिशपोः क्रमात् ॥**

'पूल सङ्घाते' । पूर्ण इति तु चुरादौ क्षीरस्वामी । पूणेति

---

१. पुलेरित्यस्य स्थाने.

शाकटायनः । कोशशुद्धिस्त्वीदृशेषु कीदृशीति न विद्मः ॥

मूलेः प्रतिष्ठितौ मूलेद्रोहणे मूलयेदिति ।
वेलेत्तु चलने वेलेर्वरणे विलतीति शे ॥ १५७ ॥
क्षेपे णौ वेलयेद्

'वेलृ चलने' । 'विल वरणे' । 'विल क्षेपे' ॥

भृत्यां चालयेत् कम्पने चलेत् ।

'चल भृतौ' । 'चल कम्पने' । अस्य तु हेतुमण्णिचि 'कम्पने चलिरि'ति मित्त्वाच्चलयेदिति द्रष्टव्यम् । कम्पनात्त्वन्यत्र चालयति सूत्रमर्थं वेति ॥

फलेर्विशरणे फुल्लं फलितं फलति त्रयम् ॥ १५८ ॥
आदितोऽनादितस्त्वन्त्ये रूपे निष्पत्तिवाचिनः ।

'ञिफला विशरणे' । अस्याकर्मकत्वाद् भावे क्तः, 'गत्यर्थाकर्मके' (३-४-७२) त्यादिना कर्तरि च, 'क्तोऽधिकरणे च' (३-४-७६) त्यधिकरणे च । तत्रान्त्ययोः 'आदितश्च' (७-२-१६) इतीटि प्रतिषिद्धे 'उत् परस्यातः' 'ति च' (७-४-८८) इत्युत्वे च कृते 'अनुपसर्गात् फुल्ल' (८-२-५५) त्यादिना निष्ठातकारस्य लत्वनिपातनात् फुल्लम् । आद्ये तु 'विभाषा भावादिकर्मणोः' (७-२-१७) इतीट्प्रतिषेधविकल्पात् फलितं च । क्तश्चायं 'ञीतः क्तः' (३-२-१८७) इति वर्तमाने भवति, नतु भूते 'तक्रकौण्डिन्य'न्यायेन बाधात् 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधकः' इति चाहुः । येन नाप्राप्त इति च यस्मिन् प्राप्त एवेत्यर्थः । अपरे पुन-

१. क्षिपत्यन्यथाकरोति वेत्यर्थः.

भूतेऽपि भवतीत्यूचुः । 'शबर्या पूजितः सम्यग्' इत्यादिप्रयोगाश्चात्रैवानुगुणाः । 'अपवादविषये क्वचिदुत्सर्गस्यापि समावेशः' इति भोजदेवः । आह स्म चैतत्सर्वं सुधाकरः—"'अनेन वर्तमाने क्तेन भूते प्राप्तः क्तो बाध्यते' इति भर्तृहरिः [1] भाष्य-(टकार?) टीकाकृतस्तु भूतेऽपि भवतीत्यूचुः । तथा च पूजितो गतः पूजितो यातीति भूतकालो वाच्यः । नतु पूज्यमानो वर्तमान" इति । 'फल निष्पत्तौ' । अस्य चानादित्त्वादनिट्त्वोत्त्वयोरसम्भवेन फुल्लाभावाद् अन्त्ये इत्युक्तम् ॥

†विदारणे शपि दलेद् दालयेदिति णौ दलेः ॥ १५९ ॥

'दल विदारणे' । अन्त्यो ग्रसादिः । विशरणे त्वाद्यं बहवः पठन्ति । 'दलन्ति ककुभानि चे'ति दण्डिनः प्रयोगः । सर्वथाप्यस्य 'दलिवली'ति मित्त्वाद् दलयेदित्यपि विशरणे द्रष्टव्यम् ॥

श्लेषे मिलेत् सङ्गमे तु मिलते मिलतीति च ।

'मिल श्लेषणे' 'मिल [3] सङ्गमे' । तुदादी । अत्र मैत्रेयरक्षितः—'मिल श्लेषण इत्येके पठन्ती'ति । कौमाराः पुनरमुमेव पठन्ति । शृङ्गारप्रकाशे तु 'मिलन्त्याशासु जीमूता' इत्यपठितधातुषु मिलतिः प्रदर्शितः ॥

अर्दने देवयेद् दीव्येत् क्रीडादौ परिकूजने ॥ १६० ॥

---

१. आनुगुण्यं च शबर्येति तृतीयानिर्देशस्य द्रष्टव्यम् । अन्यथा हि 'क्तस्य च वर्तमाने' (२-३-६७) इति षष्ठ्या भाव्यम्. २. 'ज्ञातमिति तु भूतेऽपि भवति तेनेत्यधिकारात् तृतीयान्तादुपज्ञातेऽर्थेऽण्प्रत्ययविधानाद्' इति 'मतिबुद्धि' (३-२-१८८) इति सूत्रे कैयटः. ३. अयं स्वरितेत्.

† इदमर्धं 'फलेर्विशरणे फुल्लम्' इत्यतः प्राक् पठितं कपुस्तके.

**देवयेतेदितो दिन्वेद् देवेर्देवेत देवने ।**

'दिवु अर्दने' । 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' । 'दिवु परिकूजने' । चितादिः । 'हिवि दिवि धिवि जिवि प्रीणनार्थाः' । 'तेवृ देवृ देवने' । अनुदात्तेतौ ॥

**माने गर्वयते दर्पे गर्वतीति भवेच्छपि ॥ १६१ ॥**

'गर्व माने' । पदादिः । 'कर्व खर्व गर्व दर्पे' ॥

**ष्ठीवति ष्ठीव्यतीत्येते स्यातां निरसने ष्ठिवेः ।**

'ष्ठिवु निरसने' । अन्त्यो दिवादिः । 'सादेशे सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः' । इति वार्तिकेन सत्वाभावः । 'ष्ठिवुक्लमुचमां शिति (७-३-७५) इति दीर्घः ॥

**पूरणे पूर्वतीति स्यात् पूर्वयेण्णौ निकेतने ॥ १६२ ॥**
**पूर्व्यतीति तु यत् स्वप्ने तत् कण्ड्वादिषु दर्शनात् ।**

'पुर्व पर्व मर्व पूरणे' । 'उपधायां च' (८-२-७८) इति दीर्घः । 'पुर्व निकेतने' । तच्च निवासः । 'पूर्व भावे स्वप्ने च' । कण्ड्वादिगणपाठेषु पूर्वशब्दो न दृश्यते । यस्त्वयं दर्शितः, सोऽप्येवं लोटोऽर्थनिर्देश एव भवेत् । तथा चामोघायां वृत्तावर्थनिर्देशाद्विना शाकटायनः कण्ड्वादीन् पठन् पूर्वशब्दं न पपाठ । गणपाठे तु लोटो धौर्त्ये पूर्वभावे स्वप्ने चेत्यर्थत्रयं निर्दिदेश ॥

**व्यक्तोक्तौ क्लेशते क्लेशेः क्लिश्नाति तु विबाधने ॥ १६३ ॥**
**दिवादेरुपतापेऽर्थे तङि स्यात् क्लिश्यतेपदम् ।**

'क्लेश व्यक्तायां वाचि' । अनुदात्तेत् । बाधन इति दुर्गः । 'क्लिशू विबाधने' । क्र्यादिः । क्लिशु उपतापे ॥

**दंशने दशतीति स्यात् तत्र दंशायते णिचि ॥ १६४ ॥**
**भाषणे दंशयेत्**

'दंश दंशने'। 'दंशसञ्जे'ति (६-४-२५) नलोपः। 'दशि दंशने'। चितादिः। दंशेत्येके। तथा च दंश् इति*। शाकटायनः पुनर्दशुङिति। दशि भाषार्थः॥

**काशेर्दीप्तौ काश्येत काशते।**

'काश्टृ दीप्तौ'। दिवादिर्भूवादिश्च। अनुदात्तेत्॥

**लिश्यते लिशतीत्येवमल्पीभावे गतौ क्रमात् ॥ १६५ ॥**

'लिश अल्पीभावे'। दिवादिः। तुदादिश्चायं क्षीरस्वामिधनपालयोः। 'लिश गतौ'। तुदादिः। तयोरनुमतोऽयं पाठः। द्विष्पाठस्त्वेवमर्थभेदान्नूनम्। एवं तु 'लिश गत्यल्पीभावयोरि'त्यनुक्तिर्वैचित्र्यार्था॥

**व्याप्तावश्नुत इत्याहुरश्नातीति तु भोजने।**

'अशू व्याप्तौ'। स्वादिः। 'अश भोजने' क्र्यादिः॥

**बाधने स्पर्शने चार्थे हिक्कादौ स्पशते स्पशेत् ॥ १६६ ॥**
**ग्रहणे श्लेषणे चार्थे चुरादौ स्पाशयेत णौ।**

'स्पश स्पर्शबाधनयोः'। क्षीरस्वामी तु 'पषेत्येके। पाषण्डः पाषाणः' इत्याह। दुर्गशाकटायनयोश्चैष एव पक्षः। तत्र चाद्यः पाठः 'प्रतिस्पशोऽविसृजतूर्णितमः' 'यतो व्रतानि पस्पशे' 'शब्दविद्येव नो भाति राजनीतिरपस्पशा' इत्यादिप्रयोगानु-

* इदं वाक्यं दंशेति पाठं संवादयितुं प्रवृत्तमिव भासते। पदभ्रंशश्चात्रार्थप्रतीतेरनुमातव्योऽस्ति.

गुणः । पाषण्डादिस्तु 'पष अनुपसर्गाद्' इत्यस्य कथादेर्भविष्यति; 'पष बन्धने' इत्यस्यैव वा युजादेः । 'पश बन्धने' इत्यत्र मैत्रेयरक्षितः-'पष बन्धन इति युजादावेके पठन्ति' इति । अव्युत्पन्नो वास्तु । 'स्पश ग्रहणश्लेषणयोः' । चितादिः ॥

**आशते भ्लाशते दीप्तौ आश्यते भ्लाश्यते तथा ॥ १६७॥**

'टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ' । 'वा भ्राशे'ति (३-१-७०) वा श्यन् ॥

**झषेज्झषेत संवृत्यामादाने हिंसने झषेत् ।**

'झष आदानसंवरणयोः' । झष हिंसार्थः ॥

**इष्णात्याभीक्ष्ण्य इच्छायामिच्छेद् गत्यर्थ इष्यति ॥**

'इष आभीक्ष्ण्ये' । पौनःपुन्यं भृशार्थो वाभीक्ष्ण्यम् । तद्विषयायां क्रियायामित्यर्थः । तथा च श्रूयते—'पुर इष्णाति पुरुहूतः पुर्वीः' इति । अत्र ह्यासुरीणां पुरूणां पुरामभीक्ष्णं हननादिरर्थो गम्यते । 'इषु इच्छायाम्' । यथा तु 'तीषसहलुभरुषरिष' (७-२-४८) इत्यत्र " 'इषेस्तकारे श्यन्प्रत्ययात् प्रतिषेधः' इह मा भूत् प्रेषिता प्रेषितुं प्रेषितव्य"मिति भाष्यं, तथा इषेत्येव पाठः । यदाह कैयटः—"इषु इच्छायामिति केचित् तौदादिकमुदितमधीयते । अन्ये तु उदित्त्वस्य प्रयोजनमपश्यन्त इष इच्छायामिति पठन्ति । ये त्विह 'तीषुसहे'ति पठन्ति । तन्मतेनेह विशेषणार्थ उकारः । तत्र वार्तिककारमतेन त्रयोऽपीषयोऽननुबन्धकाः; इह च तीषसहेति पाठः । तदाह इषेरिति" इति । अत्र च 'तीषे'त्यनेनैव क्त्वायामिड्विकल्पः सिद्धः । 'शतुर्वा नुमि'ति

चोक्तमेवोन्नेयम् । 'इषुगमियमां छः' (७-३-७७) । 'इष गतौ' । दिवादिः । 'जेषृ णेषृ एषृ प्रेषृ गता'वित्यस्य तु तङि एषते । अत्रैव तु क्षीरस्वाम्याह—'चुरादावप्येषयती'ति ॥

'ईषतीतीष उञ्छेऽर्थे गत्यादावीषते भवेत् ।

गत्यादाविति । ईष इत्येव । 'ईष उञ्छे' । 'ईष गतिहिंसादर्शनेषु' ॥

घुषेर्विशब्दनादौ णौ घोषयत्यविशब्दने ॥ १६९ ॥
घोषतीतीदितो घुंषेद् घुंषते कान्तिकर्मणि ।

'घुषिर्विशब्दने' । तच्च शब्देन स्वाभिप्रायप्रकाशनम् । धातूनामनेकार्थत्वेनार्थान्तरस्यापि सम्भवादादिशब्दः प्रकारार्थो व्याख्येयः । यदि तु 'विशब्दनार्थे णौ' इति पाठः स्यात्, तदा न कश्चित् क्लेशः । 'घुषिरविशब्दने' (७-२-२३) इत्यत्र विशब्दने विभाषा घुषेर्णिज् भवतीति भाष्ये[1] स्थिते घोषतीत्यपि भवति । 'घुषिरविशब्दार्थः' । घुषिर् इत्ययं धातुः यथाप्रयोगं विशब्दनादन्यत्रार्थे वर्तत इत्यर्थः । शब्दार्थ इति तु क्षीरस्वामिधनपालभागवृत्तिकाराः । शब्द इति चन्द्रदुर्गौ । 'घुषृ शब्दे' इति शाकटायनः । तेन चेरित्स्थाने ऋदित् क्रियते । अस्मिंश्च पाठे अस्यैवानेकार्थत्वेन विशब्दनार्थत्वस्यापि सम्भवाद् विनापि णिज्विकल्पेन विशब्दनेऽपि घोषतीति सिध्यति । प्रपञ्चितं चैतत् प्रक्रियारत्ने । 'घुषि कान्तिकरणे' । 'घषि करणे' इत्यन्ये । घसी-

---

१. इत्थं हि भाष्यम्—'किमर्थमविशब्दने इत्युच्यते । न विशब्दने चुरादिणिचा भवितव्यम् । एवं तर्हि सिद्धे सति यदविशब्दने इत्याह, तद् ज्ञापयत्याचार्यो विशब्दने घुषेर्विभाषा णिज भवतीति'.

त्यपरे । तथा च क्षीरस्वामी—"'घसि करणे' । घंसते । चन्द्रो घषीत्याह । घंषते । 'घुषि कान्तिकरणे' इति दुर्गः" इति ॥

**ईर्ष्यायामादरे चार्थे क्रमात् सूर्क्ष्यति सूर्क्षति ॥ १७० ॥**

'सूर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यार्थाः' । 'षूर्क्ष आदरे' इति च अनादरे इति च बहवः । क्षीरस्वामी 'षूर्क्ष्य अनादरे' इति पठित्वाह—'षान्तोऽयमिति चन्द्र' इति । तत्र च 'सोमेन यक्ष्यमाणो नर्तु सूर्क्ष्येन्न नक्षत्रम्' इति दर्शनाद्यथादैवमेव युक्तम् ॥

**धारणे पोषयेत् पुष्टौ पुष्येत् पुष्णाति पोषति ।**

'पुष धारणे' । ग्रसादिः । 'पुष पुष्टौ' । दिवादिः क्र्यादिर्भ्वादिश्च । 'पूष वृद्धौ' इत्यस्य तु पूषति ॥

**म्लेच्छने म्रक्षयेन्म्रक्षेत् सङ्घाते**

'म्रक्ष म्लेच्छने' । तच्चाव्यक्तवाग् अपशब्द इत्यर्थः । 'म्लेच्छो हवा एष यदपशब्दः' इति च श्रूयते । 'म्रक्ष सङ्घाते' ॥

**दाहकर्मणि ॥ १७१ ॥**

**श्लोषति प्लुष्यतीति स्तां प्लुष्णाति स्नेहनादिषु ।**
**प्रुष्णाति च प्रोषति च दाहे**

'श्रिषु श्लिषु प्रुषु प्लुषु दाहे' । 'प्लुष दाहे' । पुषादिः । क्षीरस्वामीत्वन्यथापि दिवादावमुं पपाठ । तत्फलभेदः पुनरप्लुषदप्लोषीदित्यङो भावाभावौ । 'प्रुष प्लुष स्नेहनसेचनपूरणेषु' ।

---

१. सोमेन यक्ष्यमाणो 'वसन्ता ब्राह्मणोऽग्निमादधीत' 'उत्तरयोः फल्गुन्योरग्निमादधीत' इत्यादिऋतुनक्षत्राणि नाद्रियेतेत्यर्थकम् आपस्तम्बश्रौतसूत्रमिदम्. २. दैवोक्तमादरार्थत्वमेव धातोर्युक्तं, न पुनरन्योक्तमनादरार्थत्वमित्यर्थः. ३. पुषादेर्बहिरपि.

